# संस्कृत भाषा

## ऐच्छिक (संस्कृत) समूह

## कक्षा ८

लेखक

श्री चूडानाथ भट्टराय
श्री अम्बिकाप्रसाद अधिकारी
श्री लीलानाथ वाग्ले

प्रकाशक

जनक शिक्षा सामग्री केन्द्र लिमिटेड
सानो ठिमी, भक्तपुर



"राष्ट्रिय प्रतिभालाई फुलाउने, फलाउने
तथा जनताको मनोभावनालाई
विकासमूलक बनाउने नीति लिई लागू
गरिएको यस राष्ट्रिय शिक्षा
योजनाबाट केही वर्षभित्रै एउटा
जागरूक, परिश्रमी र उन्नतिशील
समाजको सिर्जना हुन सक्नेछ भन्ने
मैले आशा लिएको छु।"

–श्री ५ वीरेन्द्र

# हाम्रो भनाइ

शिक्षालाई जीवन अपेक्षित गराई विद्यार्थीहरूमा राष्ट्रियता, राष्ट्रिय एकता, सार्वभौमिकता र नैतिकताजस्ता गुणहरूको विकास गराउने र सामाजिक जीवनयापनका लागि आवश्यक ज्ञान र सीप हासिल गराउने राष्ट्रिय शिक्षा पद्धतिको योजना २०२८ को विशुद्ध उद्देश्य अनुरूप विद्यालय स्तरका पाठ्यक्रम र पाठ्यपुस्तकहरूको विकास गर्ने प्रक्रिया चालू रहिआएको हो। यिनमा देखिएका कतिपय कमीहरू हटाउने र विषयवस्तुलाई समय सापेक्ष गराउने प्रयासमा बेला-बेलामा संशोधन पनि भई आएका छन् ।

यसै क्रममा शिक्षालाई अझ प्रभावकारी र व्यावहारिक तुल्याउन २०३८ को शैक्षिक सत्रदेखि पाठ्यक्रम र पाठ्यपुस्तकहरूमा सुधार गरिएको छ। तदनुरूप कक्षा ८ का लागि पाठ्यक्रम २०३८ अनुसार संस्कृत भाषा विषयको यो पाठ्यपुस्तक तयार गरिएको हो । यस पाठ्यपुस्तकका परिमार्जनकर्ता श्री चेतोनाथ शर्मा आचार्य र श्री परमानन्द शर्मा बोहोरा हुनुहुन्छ ।

यस पाठ्यपुस्तकलाई सकेसम्म स्तरयुक्त बनाउने प्रयास गरिएको छ तापनि यसमा भाषागत, विषयगत र शैलीगत कतिपय त्रुटिहरू अझ हट्न नसकेका होलान् । तिनका सुधारका लागि शिक्षक, अभिभावक विद्यार्थी लगायत सबै बुद्धिजीवी पाठकहरूको सक्रिय सहयोगको महत्त्वपूर्ण भूमिका रहने हुँदा यस पवित्र सेवा कार्यमा यहाँहरूको रचनात्मक सुझाव यो केन्द्र सदैव स्वागत गर्दछ ।

श्री ५ को सरकार
शिक्षा तथा संस्कृति मन्त्रालय
पाठ्यक्रम पाठ्यपुस्तक तथा निरीक्षण विकास केन्द्र
सानो ठिमी, भक्तपुर
नेपाल

# अनुक्रमणिका

# आचाराध्यायः



(वेदमनूच्याचार्योऽन्ते वासिनमनुशास्ति)

सत्यं वद । धर्मं चर । स्वाध्यायान्माप्रमदः ।
आचार्याय प्रियंधनमाहृत्य प्रजातन्तुमाव्यवत्छेत्सीः ।
सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् ।
कुशलान्न प्रमदितव्यम् । भूत्यै नप्रमदितव्यम् ।
स्वाध्यायप्रवचनाभ्यां नप्रमदितव्यम् ।
देवपितृकार्याभ्यां नप्रमदितव्यम् ।
मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव ।
अतिथिदेवो भव । यान्यनवद्यानि कर्माणि तानि
त्वयोपास्यानि । नो इतराणि । यान्यस्माकं
सुचरितानि तानि त्वयो पास्यानि । नो इतराणि ।
श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् ।
भिया देयम् । संविदा देयम् । एष आदेशः ।

**कठिनाः शब्दाः**

मात्रमदः=असावधानी नगर
नप्रमदितव्यम्=असावधान नबन
देयम्=दिनयोग्य छ
माव्यवत्छेत्सीः=विच्छिन्न गर्ने छैनौ
अनवद्य=अनिन्द्य
संविदा देयम्=ज्ञानपूर्वक दिनयोग्य छ

## अभ्यासः

१. रिक्तस्थानं पूरयत

(क) सत्यान्न.. .. .. ..
धर्मान्न.. .. .. ..
कुशलान्न.. . ...

(ख) .. .. .. ..नप्रमदितव्यम्
.. .. .. ..नप्रमदितव्यम्
.. .. .. ..नप्रमदितव्यम्
.. .. .. ..नप्रमदितव्यम्

२. मातृदेवो भव
पितृदेवो भव
आचार्यदेवो भव

**इत्येषामभिप्रायं स्पष्टी कुरुत**

३. कीदृशानि कर्माणि उपास्यानि ?

४. "यान्यस्माकम्" इत्यत्र "अस्मत्" शब्दस्य कोऽर्थः ।

**अनुरोधः**– आचाराध्यायं पठित्वा स्मृत्वा च तदनुसार निर्वहणे प्रयतत ।

**संस्कृते अनुवादं कुरुत**

हामीहरू पानी पिउँछौं । म तिमीहरूलाई जित्छु । तँ मलाई बोलाउँछस् । भाइ मलाई ढाँग्छ । बालक दुई घोडालाई हेर्छ । विद्यार्थीहरू पाठ पढ्छन् । तिनीहरू राम्रा छन् ।

**भाषायामनुवादं कुरुत**

त्वं जलं पिबसि । यूयं मां पश्यथ । दीपा अन्धकारं नाशयन्ति । हंसः कपोतान् जयति । पिता पुत्रं क्षमते । वयं रुप्यकं लभामहे ।

# गोरक्षनाथः



सिद्ध गोरक्षनाथस्य गुरु मत्स्येन्द्रनाथो बाल्यकालाद् महासिद्धः । योगमार्गे हठयोग राजयोगौ प्रसिद्धौ । तत्र हठयोगमार्गस्य प्रथम प्रवर्तक आदिनाथः । प्रवृद्धया योगसम्पत्या तं शङ्करावताररूपं कल्पयन्ति लोकाः । तस्यैवादिनाथस्य शिष्यो मत्स्येन्द्रनाथः । तस्य जन्मविषये ईदृशी किवदन्ती श्रूयते ।

कदाचिच्छिव उद्याने पार्वतीं योगविद्यामुपादिशत् । उद्यानस्य तडागे मत्स्या आसन् । नारायणः कस्यापि मत्स्यस्योदरं प्रविश्य निभृतं सर्वां योगविद्यामश्रृणोत् । तदनुलब्ध योगतत्त्वः सः बालक रूपेण मत्स्योदरान्निर्गम्य मत्स्येन्द्रनाथनाम्ना प्रसिद्धोऽभूदिति ।

अन्यविधकथनानुसारेणायं कामरूपदेशीयो योगमार्गस्य दर्शक इति । तस्य नेपालागमन प्रसङ्गस्त्वीदृशः । यदा नेपाले बहुकालपर्यन्तं जलवर्षणं निरुद्धं तदाऽन्नानामनुत्पादनेन जनाः पीडिताः । अवर्षणदोषात्प्रजारक्षितुं राजा नरेन्द्रदेवो विज्ञ तान्त्रिकसहयोगेन मत्स्येन्द्रनाथं नेपाल राज्ये समानीतवान् इति । अस्तु किवदन्ती यथा तथाऽपि, परमेषः योगमार्गस्य देशिक इत्यत्र न काऽपि विप्रतिपत्तिः ।

सोऽयं योगिवरो नेपाले स्वभावनानुसारं सम्मान्यते लोकैः । बौद्धा इमं करूणामूर्ति रूपेण मानयन्ति, अन्ये च सिद्धयोगी रूपेण पूजयन्ति । धार्मिक समन्वयसम्पन्नेऽत्र बहुषु देवेषु देवीषु च ईदृश्यैव भावधारा प्रवहमाना दृश्यते ।

मत्स्येन्द्रनाथस्य मूर्तिरपि श्वेता रक्ता च विद्येते । श्वेतायाः मन्दिरं काष्ठमण्डपे विराजते, यस्याः रथयात्रा चैत्रशुक्लाष्टम्यादारभ्य पूर्णिमायां समाप्यते ।

रक्तायाः मूर्तेः मन्दिरस्तु ललितपत्तने बुङ्गमति प्रदेशे च वर्तते । अस्याः मूर्तेः रथयात्रा वैशाखशुक्लप्रतिपद् आरभ्य सार्धमास द्विमास पर्यन्तं महता समारोहेण प्रचलति । यात्रा समाप्तिस्तदा जायेत यदा जाउलाखेल नाम्नि स्थाने कञ्चुकं प्रदर्श्यते । कञ्चुकप्रदर्शनदिनं मौहूर्तिका निर्धारयन्ति, तस्मिन्दिने क्षेत्रीयावकाशोऽपि भवति । न केवलं लक्षाधिकाः जनाः अपितु राज्ञो राजपरिवाराणामन्येषाञ्च पदाधिकारिणामुपस्थितिः कञ्चुकप्रदर्शनदिने जायते ।

प्रायेण बौद्धा महता समारोहेणेमां यात्रां मानयन्ति, रथं परितो नार्यः शतसहस्रसंख्यकान् दीपान् ज्वालयन्ति च ।

अस्यैव योगिवरस्य शिष्यो गुरु गोरक्षनाथः । अयञ्च नेपालराष्ट्र निर्मातुः श्री ५ पृथ्वीनारायणशाह देवस्य आराध्यदेव आसीत् ।

अस्य जन्मविषयेऽपि ईदृश आभाणकः प्रसिद्धः । योगिवरो मत्स्येन्द्रनाथ स्तीर्थानि पर्यटन् कदाचिदयोध्यां प्राप । तत्र सः भिक्षार्थं कस्यापि द्विजस्य द्वारमुपाययौ । तदगृहस्थिता द्विजपत्नी हस्तयोर्भिक्षामादाय भिक्षवे दत्वा खिन्नमुखी तस्थौ । योगिवरेण ज्ञातमेषा निरपत्या इति । कृपया सत्पुत्रावाप्तये योगकरण्डकात्किञ्चिद्विभूतिं निस्सार्याशयनाय तस्यै प्रायच्छत्, स्वयञ्च निरगच्छत् ।

चञ्चलमना ब्राह्मणी तां विभूतिं प्रतिवेशिन्यै दर्शयामास । तत्पुत्रावाप्तिमसहमाना प्रतिवेशिनी अपरिचितेन भिक्षुणादत्तं भसितं खादितुमयोग्यमिति स्वाशयं प्रकटितवती । विप्रा तां विभूतिमेकस्मिन् गर्ते प्रचिक्षेप ।

द्वादश वर्षानन्तरं मत्स्येन्द्रनाथः पुनरपि तस्मिन्नेव गृहे भिक्षार्थं प्राप्याऽपृच्छत्– क्व ते पुत्र इति । तत्प्रश्नेन चकिता ब्राह्मणी भयविकृतया वाचा सर्वं यथावृत्तं भिक्षवे न्यवेदयत् ।

अमोघसङ्कल्पे योगी तमेव गर्तं लक्ष्यीकृत्य एहि वत्स ! इत्याह्वयत् । ततो द्वादश वार्षिको बालकस्तस्मादेव गर्तात्प्रादुरभवत् । तत्पश्चात् योगीश्वरेण दत्त योगविद्योपदशः सः गोरक्षनाम्ना प्रसिद्धो योगी बभूवेति । एवं मत्स्येन्द्रनाथोपदिष्ट मार्गेण योगं साधयन् गोरक्षनाथो महतीं ख्यातिमवाप ।

अस्मिन् देशे गुरोर्मत्स्येन्द्रनाथस्य तदीय शिष्यस्य गोरक्षनाथस्य च प्रसिद्धिः सर्वैरनुभूता ज्ञाता च । नेपालराष्ट्रस्य मुद्रा गोरक्षनामाङ्किता भवति । पाशुपतक्षेत्रे मृगस्थल्यामन्यत्र च गोरक्षनाथ मन्दिराणि विद्यन्ते । अस्य मठे नाथ सम्प्रदायानुयायिनो योगिनस्तिष्ठिन्ति । भारतेऽपि

गोरक्षनाथानुयायिनः प्राचुर्येण लभ्यन्ते। गोरखपुर नगरे वर्तमानं गोरक्षनाथ मन्दिरं मठश्चाति-प्रसिद्धम्।

मत्स्येन्द्रनाथ गोरक्षनाथयोः प्रसादेन सचेतसां नेपालवासीनां वीर्येण च हिन्दुराष्ट्र नेपाल-श्चिरकालं स्वतन्त्र रूपेणावस्थास्यतीति ग्राशास्यते।

## कठिनाः शब्दाः

सिद्धः = सिद्धि प्राप्त गरेको
निर्गम्य = निस्केर
निरुद्धम् = रोकियो
किंवदन्ती = लोककथन
कञ्चुकम् = भोटो
प्रतिवेशिन्यै = छिमेकीलाई
गर्ते = खाडलमा
लक्ष्यीकृत्य = लक्ष्य गरेर (हेरेर)
मुद्रा = पैसा
निमृतम् = सुटुक्क
देशीयः = देशमा भएको
तान्त्रिकः = तन्त्र जान्ने
समन्वयः = मेल
लक्षाधिकाः = लाखभन्दा बढी
भसितम् = खरानी
प्रचिक्षेप = फ्याँकिन्
स्वाशयम् = निजी चाहना

### अभ्यासः

१. मत्स्येन्द्रनाथः इति नाम कथम्?
२. मत्स्येन्द्रनाथः कस्माद् योगविद्यामलभत?
३. अत्रस्था जनाः मत्स्येन्द्रनाथं कया भावनया पूजयन्ति?
४. गोरक्षनाथस्योत्पत्तिः कथम्?
५. कुत्र वर्तते
   (क) श्वेतमत्स्येन्द्रस्य मन्दिरम्?
   (ख) रक्तमत्स्येन्द्रस्य मन्दिरम्?
६. कदा भवति
   (क) श्वेतमत्स्येन्द्र यात्रा?
   (ख) रक्तमत्स्येन्द्र यात्रा?
   (ग) कञ्चुक प्रदर्शनम्?
७. कः मत्स्येन्द्रनाथं नेपालमानयत्? चिन्हेनाङ्कितं कुरुत
   (क) दिव्यदेवः
   (ख) नरेन्द्रदेवः
   (ग) मानदेवः

संस्कृते अनुवादं कुरुत

दुई बालक बढ्दछन् । तँ घर जान्छस् । म तिमीहरूलाई संझन्छु । त्यो पुस्तक कितेर ल्याउँछ । ती दुई नाच हेर्छन् । भाइहरू पुस्तक पढछन् । तिमीहरू इनाम पाउँछौ । हामीहरू ईश्वरलाई सम्झन्छौं ।

भाषायामनुवादं कुरुत

वयं पाठं चिन्तयामहे । धूर्ता: नरान् वञ्चयन्ते । कुम्भकार: घटं रचयति । सुशीला: छात्रा: गुरुं नमन्ति । वयं कार्याणि कुर्महे । सेवक: राजानं प्रार्थयते । ते न सन्ति । आवां पत्रं लिखाव: । श्रथम् श्रोदनं न भक्षयति। भक्त. ईश्वरं पूजयति ।

# इतिहास प्रदीपो मानदेवः

लिच्छविवंशे समुत्पन्नो मानदेवोऽस्मदीयदेशस्य दीप्तिमान् प्रदीपः । यतस्तस्य विमले यशः प्रकाशे विभान्ति विविधानि सुकृतकर्माणि । धर्मदेव पुत्रो मानदेवः पितरि स्वर्याते तत्रत्यं राजपदमधिष्ठितवान् । राज्यरोहणकालस्तु षष्ठ शताब्द्याः प्रथमपादः ।

शासन पदमारूढो मानदेवः शरीरावयवैः समुचितपरिधानैश्च मूर्तिधारी क्षात्रो धर्म इव व्यराजत । विस्तृतं वक्षः कपाटम्, वृषस्यैवपीनःस्कन्धः, शालदृशौ दीर्घौ बाहू, सुदृढं, सुगठितञ्च शरीरं तस्य शिरसि रत्नकाञ्चनोज्ज्वलमुष्णीषमाबध्य प्रविचरन् स स्वप्रजानां नयनानन्दजनकोऽभूत् ।

तस्मिन् राजनि शास्तरि सति नेपाले वास्तुकलायाः, मूर्तिकलायाः, धर्मस्य, साहित्यस्य च विकासः शिखरमारूढ इति इदानीन्तन प्राप्तैः कतिपयोदाहरणैरनुमातुं शक्यते । चम्पकनारायण निकटे कच्छपपीठे संस्थापितं तच्छिलापत्र प्रचुरमैतिहासिकमहत्त्वमावहति । सुललितायां संस्कृतभाषायामुट्टङ्कितमेतत्पत्रं प्रामाणिक रूपेण तात्कालिकमैतिहासिक विवरणं प्रस्तौति ।

तस्य पिता धर्मदेवो यदाऽसमय स्वकालकवलितस्तदा माता राज्यवती भृशं रुदती सतीरूपेण पतिमनुगन्तुमैच्छत् । तस्मिनवसरे साश्रुवदनो मानदेवो मातुश्चरणयोः पतित्वा न्यवेदयत्, नियति निर्देशेन पितरि स्वर्यातेऽपि जीवितया भवत्या मम परित्यागो नोचितः । यदि भवती स्वनिर्णयान्न परिवर्ततेश्चेत्तदाहं प्रथमं प्राणांस्त्यक्ष्यामि, पश्चादेव भवत्या अवकाश इति ।

इत्थं स्वपुत्रस्य दीन वचनैः साश्रुनेत्रैश्चाकृष्टा राज्यवती सती गमन निश्चयान्निवृत्ता । पत्युरौर्ध्वदेहिकक्रियानन्तरं राज्यधुरं सञ्चालयितुं सा पुत्रस्य साहाय्यं कुर्वती । स्वगुणगणैः प्रवृद्धो मानदेवो मातुः साहाय्यं प्राप्य शत्रून् मर्दयितुं राष्ट्रमुन्नमयितुञ्च प्राभवत् । मातुल सहायः सः गण्डकीं तरङ्गिणीं तीर्त्वा मल्लपुरीमपि वशी चकार । यदा मानदेवो राजपदमारूढस्तदा राजधर्मानुसारेण प्रजानां सौविध्य साधनाय सः प्रायतत । वाणिज्यविधौ सौकर्यमानेतुं तेन स्वतन्त्रामानाङ्क मुद्रा प्रकाशिता । वास्तुकलायाः प्रकृष्टतरमुदाहरणं प्रस्तोतुं तेन मानगृहाख्यो राज प्रासादो निर्मितः ।

यस्य प्रासादस्य वास्तुकला कौशलगतं सौन्दर्यं वैदेशिकाः यात्रिणोऽपि मुक्तकण्ठेन प्राशंसन् । वैष्णवधर्मप्रियो मानदेवो मातुरिच्छां पूरयितुं विविधक्षेत्रेषु देवमूर्तिनां संस्थापनं कृतवान् । पशुपतिनाथस्य निकटवर्तिन्या वाग्वत्या पूर्वतटे इक्षुमत्याः, पश्चिमे लाजिम्पाट स्थाने च मानदेवस्थापिते भगवतो वामनस्य मूर्तिविराजेते । दोलाद्रिगिरौ ( चम्पकनारायणे ) तेन भगवतो विशेषपूजनं, गरुडध्वजार्पणं, क्षेत्रपरिमार्जनं, शिलापत्रस्थापनञ्च कृत्वा तत्क्षेत्रस्य महत्त्वं चातुर्मुख्येन वर्द्धितमस्ति ।

धार्मिक दृष्ट्या मानदेव कुले औदार्यं प्राप्यते। स्वयं मानदेवपिता धर्मदेवो माता राज्यवती च शिवविष्णु भक्तिरता: क्षेमसुन्दरी गुणवत्यौ च पत्न्यौ शिवलिङ्गं स्थापितवत्यौ। महिष्या भोगिनी पुत्र्या विजयवत्या च शिवलिङ्गमेव स्थापितमस्ति। पितामह: शङ्करदेव: शैव:। प्रपितामहो वृषदेवस्तु सुगतशासन पक्षपाती बौद्ध:।

एवं सर्वं विलोक्य कथयितुं शक्यते लिच्छविशासने धार्मिक विषये स्वातन्त्र्यमनुमोदितम्। एकविधं धर्ममनुमन्यमानो नान्यविधं धर्मं निन्दति, न वा तिरस्करोति। तथा च नेपाल भूमौ धार्मिक समन्वयस्य बीजं लिच्छविकालेन केवलमङ्कुरितमपितु पल्लवितञ्च।

**कठिना: शब्दा:**

अस्मदीय देशस्य = हाम्रो देशको
अधिष्ठितवान् = बसे
कपाटम् = द्वार
उष्णीषम् = पगरी (टोपी)
शिखरम् = टुप्पामा
उट्टङ्कितम् = खोपिएको
अनुगन्तुम् = पछि लाग्न
न परिवर्तते = फर्किनु हुन्न भने
सौविध्यम् = सुविधा
और्ध्वदेहिक क्रिया = मृत्युपछि गरिने काज

विमले = निर्मल
क्षात्र: = क्षत्रियसंबन्धी
व्यराजत = शोभित भए
नयनानन्दजनक: = आँखालाई आनन्द दिने
आवहति = धारण गर्छ (बोक्छ)
कालकवलित: = कालको गास भए (मरे)
नियतिनिर्देशेन = दैवको खटनले
त्यजामि = छोड्ने छु
औदार्यम् = उदारता
सुगतशासनम् = बुद्धशिक्षा

## अभ्यास:

१. नेपालस्येतिहासे मानदेवस्य स्थानं निरूपयत।
२. मानदेव: कदा राजपदमारूढ:।
३. राज्यवती का ? सा कथं पतिं नानुगच्छत् ?
४. मानदेव समये केषां वस्तूनां प्रायेण विकास: ?
५. कस्मिन् स्थाने राज्ञा वामनस्य मूर्ति स्थापिता ?
६. **निम्नाङ्कित शब्दानामर्था: लेख्या:**

(क) मानगृहम्
(ख) मानाङ्कमुद्रा
(ग) भोगिनी
(घ) शिलापत्रम्

## संस्कृते अनुवादं कुरुत

हामी तँलाई छुन्छौं । म त्यसको कुरा सुन्दिन । तिनीहरू रुपियाँ गन्छन् । गोपाल गाई ल्याउँछ । पक्षी आकाशमा उड्छ । हामी दुई फल खान्छौं । तिमीहरू विद्या चाहन्छौ । त्यो डुब्छ ।

## भाषायामनुवादं कुरुत

अग्रजः कार्यं करोति । श्रीमान् मां रक्षति । भवन्तः किं कुर्वन्ति ? बालकः उष्णं दुग्धं पिबति । भृत्यः भाण्डानि नयति । भगिनी माम् आह्वयति । अश्वाः मार्गे धावन्ति । गोपालः गोष्ठं प्रविशति । त्वं वार्तां शृणोषि किम् ? माता मोदकं रचयति ।

# शशकेन निपातितः सिंहः



अथ कस्मिश्चिद् वनऽवसत क्रूरकर्मा नाम कोऽपि सिंहः। दिवा स गुहायां स्वपिति, सन्ध्यात इतस्ततो चरति, व्यापादयति च बहून् वन्य पशून्। अनेनक्रमेण अचिरादेव तेन शतशः प्राणिनो हता स्तस्मिन् वने। सिंहस्य क्रूरेण कर्मणा संत्रस्ता वनवासिनो मृगा एकत्र मिलित्वाऽचिन्तयन्। हा कष्टम्! क्षणभङ्गुरमेव जातमस्माकं जीवितम्। केनोपायेन व्यसनमिदं समुत्तरेमेति। तत. कश्चिद् बृद्धो हस्ती ब्रूते– जानाम्येकमुपायमत्र। अन्वागच्छत माम्। अधुनैव गच्छाम– स्तस्य सिंहस्य समीपमिति।

ततस्ते सर्वे सिंहस्य निवासस्थानं गत्वा तत्र च सुखोपविष्टं तं दृष्ट्वा साष्टाङ्गपातं प्रणमन्। तदा तेषामग्रणीरब्रवीत्– भो मृगराज! वयं सर्वे वनचरास्तवदासाः। वृथा व्यापादयसि त्वं प्रतिदिनं बहून् मृगान्। यतस्तव भोजनं भवत्येकेनैव। अयमेवक्रमः प्रचलति चेदचिरा- देव मृगशून्यं भविष्यतीदं वनम्। किं भक्षयिष्यसि ततस्त्वम्। अतो हे मृगपते! त्वया सह समय कर्तुमिच्छामो वयम्। येनोभययोः कल्याणं भविष्यति इति। स क्रूरकर्माऽपृच्छत–कोऽसौ समयः। दन्ती प्रत्यभाषतः– प्रतिदिनमेकैकं पशुं वयं तव समीपं प्रेषयामः। स चात्र सायं काले आग– मिष्यति। तं त्वं सुखेन भक्षय। अन्यान् मा जहि। एवं सति विनायासं गुहायामेव भोजनं– प्राप्स्यसि चिरं च जीविष्यसि, अस्माकं कृतेऽपि किञ्चिन्निर्भयता जायते।

ततः स केसरी सानन्दमवदत् – साधूक्तं वृद्ध त्वया । संमत एष समयो ममापि । तथैवानुतिष्ठत यूयमिति । ततः प्रभृति यथा समयं प्रतिदिनमेकैकः पशुः सिंहमुपगच्छति तं च व्यापाद्य स्वोदरं पूरयति स क्रूरकर्मा ।

एवं गच्छता कालेन समायातो धूर्तबुद्धेर्नाम वृद्ध शशकस्य वारः। स च मार्गेण गच्छन् चिन्तयत् । यद्यवश्यमेव मरणं तर्हि किं सिंहस्यानुनयेन। मन्दं मन्दमेव गच्छामीति। अत्रान्तरे दृष्टः कश्चित्कूपस्तेन मार्गे । मरणात् प्राक् तृषां निर्वर्तयामि सकृदिति चिन्तयित्वा गतः स कूपतीरम् ।

तत्र स यावज्जलं पिबति तावत् स्व प्रतिविम्बं तत्र पश्यति । तद् दृष्ट्वाऽचिन्तयत् । एषावाप्येव मां रक्षिष्यतीति । ततः प्रस्थितः सः शनैः शनैः सिंहाभिमुखम् । क्रूरकर्माऽऽगच्छन्तं तं दूराद् दृष्ट्वा कोपादवदत् । रे क्षुद्र ! स्वल्प शरीरस्त्वं किमर्थं विलम्बेन समायातोऽसि ? इति । शशक प्रणम्याब्रवीत् – देव, नाहमपराधी । अहन्तु समय एव आगच्छन्नासम्, परं पथ निरुद्धोऽहं बलादन्येन सिंहेन । तस्याग्रे पुनरागमनाय शपथं कृत्वा भवते निवेदयितुमत्रा गतोऽस्मि, इति ।

स सिंहः सकोपमाह– 'आः कथमत्रैव जीवति सिंहान्तरम्' सत्वरं दर्शय तं दुरात्मानम्, येन शीघ्रं प्रेषयामि यमसदनम्' इति । ततः कूपतीरमनयत् स धूर्तबुद्धिस्तम् । दूराद् तं दर्शयित्वा सोऽवदत्–भवन्तं दृष्ट्वा विलीनः सबलवान् सिंहोऽत्रैव कूपे । क्रूरकर्मा तत्र द्रष्टुं गतः, यावत् स्व प्रतिविम्बं वाप्यामपश्यत् तं सिंहान्तरं मत्वा न्यक्षिपत् क्रोधात्तस्योपर्यात्मानम् । ततश्च जल निमग्नः सन् पञ्चत्वं गतः ।

अतएव कथितमस्ति–

> **बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतोबलम् ।**
> **पश्यसिंहो मदोन्मत्तः शशकेन निपातितः ॥ इति ।**

## कठिनाः शब्दाः

| | |
|---|---|
| व्यापादयति=मार्दछ | प्रेषयामः=पठाउनेछौं |
| संत्रस्ताः=डराएका | मा जहि=नमार |
| क्षणभङ्गुरम्=एक छिनमा नाश हुने | वारः=पालो |
| अन्वागच्छत=आओ | निवर्तयामि=पूरा गर्छु (हटाउँछु) |
| समयः=शपथ (सन्धि) | प्रतिविम्बः=छाया |
| सिंहान्तरम्=अर्को सिंह | निरुद्धः=रोकिएँ |
| तस्योपरि=त्यसमाथि | न्यक्षिपत्=फ्याँक्यो |
| पञ्चत्वं गतः=मऱ्यो | आत्मानम्=आफूलाई |

## अभ्यासः

१. क्रूरकर्मा पूर्वं किमकरोत् ?
२. वन्य पशवः सिंहेन सह कीदृशं शपथमकुर्वन् ?
३. धूर्तं शशकः पथि गच्छन् किमचिन्तयत् ?
४. क्रूरकर्मा कथं पञ्चत्वं गतः ?
५. कस्य बलम् ?

**संस्कृते अनुवादं कुरुत**

रमेशको स्वभाव राम्रो छ । खराब मानिसको बानी नसिक । विद्यार्थी साथीसँग खेल्छन् । गाउँको नजीक वन छ । परिश्रमविना विद्या हुँदैन । प्रहरी चोरको पछि लाग्छ । बिहान घुम्नु फाइदा छ । दुई विद्यार्थी यहाँ पढ्छन् । त्यसले मलाई कुट्यो । कुकुर राती भुक्छन् ।

**भाषायामनुवादं कुरुत**

माता ओदनम् अपचत् । हंसौ जलम् अपिबताम् । अहं त्वाम् अपश्यम् । शिष्य-गुरुम् अपृच्छत् । वयं पाठम् अश्रृणुम । सः तम् आह्वयत् । छात्रा गृहं प्राविशत । पुस्तकम् अपठत् ।

# संवादः



मदनभुवनौ प्रतिवेशिनौ । बाल्यो उभौ सहैव क्रीडितौ खादितौ च । इदानीं मदनो विज्ञान विद्यालये पठति भुवनस्तु संस्कृत विद्यालये । अधुनाऽवकाशमतिवाहितुं द्वावपि गृहागतौ । यदा उभयोः संयोगो भवति तदा किमपि विषयमवलम्ब्य परस्परं विवदन्तौ दृश्येते । अद्यतन दिवसे स्वस्य विषयमाश्रित्य प्राचलत् तयोः संवादः ।

मदनः– पठनन्तु खलु विज्ञानमेव । विज्ञानेन हि जगति महत्परिवर्तनमायातम् । विज्ञानं खलु बुद्धया परमोपलब्धिः । एतद्विना न किमपि प्रशंसनीयं कार्यं सम्पादयितुं शक्यते ।

भुवनः–, अधुना विज्ञानस्य महत्त्वं सर्वैरनुभूतं स्वीकृतञ्चापरै विज्ञानमेव सर्वस्याप्युन्नतेर्मूलं कारणमिति स्वीकरणन्त्ववास्तवम् । यतोऽन्यान्यापि सन्ति तादृश क्षेत्राणि यत्र विज्ञानस्य प्रवेशो नास्ति ।

मदनः– अहन्तु मन्ये, न हि विज्ञानव्यतिरिक्तं क्षेत्रमवशिष्टम् । यतो मानवानां परिधान साधनानि यान्त्रिक प्रयोग सिद्धानि । खाद्य वस्तुनामुत्पादनं वैज्ञानिक रीत्या विधीयते, पठन-पाठन साधनानि वैज्ञानिक यन्त्रैर्निर्मीयन्ते । चिकित्सा क्षेत्राणि विज्ञानमयानि, निर्माणसाधना-न्यपि न विज्ञानव्यतिरिक्तानि । मनोरञ्जक साधनानां निर्माणमपि विज्ञान क्षेत्रान्तर्गतमेव । गमनागमन क्षेत्रेषु तु विज्ञानेन द्यावापृथिव्योरिवान्तरमानीतमिति । इतः परमवशिष्टं किं स्याद् यत्र विज्ञानस्य प्रवेशं कल्पयितुं न शक्येत ।

भुवनः– यानि वस्तुनि त्वयोल्लिखितानि सर्वाण्यपि तानि प्राचीनकालात्प्रचलितानि । भिन्नता केवलं निर्माणविधावेव । पूर्वं तेषां निर्माणं श्रमसाध्यमासीत्, यान्त्रिक विकासानन्तरं

तत्र सारल्यमायातम् । इत्थमेकत्र जातेऽपि सारल्ये श्रमजीवीनां निर्माणकौशलमनेन परिहृतमस्ति । अन्यच्च खाद्यान्नानां खाद्यवस्तूनाञ्चाकृत्रिमनिर्माणमेव समीचीनम् । यान्त्रिक प्रयोगनिर्माणन्तु कृत्रिमोत्पादकम् । न हि तत्प्रशंसनीयं मन्ये । गमनागमनसाधनैः सौकर्यन्तु प्रदत्तम् परं तदपि हृदयविदारकं दुर्घटना घटकमेव दृष्टम् ।

**मदनः**– पूर्वं जनानां संख्याऽल्पतरा । अल्पानांकृते उत्पादनमपि स्वल्पमेव । परमिदानीं प्रवृद्धा जनसंख्या । प्रवृद्धानां तेषां प्रयुज्यमानवस्तु निर्भाणं यान्त्रिक प्रयोगं विनाऽसम्भवम् । यान्त्रिक सहयोगिन वस्तुनामुत्पादने कतिपय वैगुण्यमायातीति चेदन्यविध सौविध्यं विलोक्य तत्क्षन्तव्यमेव भवति । गमनागमनसाधन सौविध्येन तु विस्तृतमपि भूमण्डलं शुष्कचर्मवत्संकुचितम् । कदाचित्दुर्घटना घटनन्तु स्वाभाविकम् ।

**भुवनः**– विज्ञानं सर्वविध सौविध्यमूलम्, वैज्ञानिकी उन्नतिः सर्वोन्नतिः, विचारस्य बुद्धेः परिमार्जकमपि विज्ञानमेवेति । नेत्रे निमील्य स्वीकृत्येऽपि सर्वमपि विज्ञानं भूताधीनमिति तु निर्विवादम् । भूतानि हि जडानि । न हि जडानां विकासेन मानवीय भावना विकास इति स्वीकर्तुं शक्यते । न वा भावना विकासं विना मैत्र्यादि मानवीय गुणविकासः, न च मावनीय गुण विकासं विना शान्तिरिति । इत्थञ्चेत्सर्वं विलोक्यान्ते इदमेव कथयितुं स्वीकर्तुं च शक्यते अस्तु नाम प्रचुर संख्याको भौतिक विकासः, परन्तु तत्राऽऽध्यात्मिक भावना भावितं नियन्त्रणमावश्यकम् । अनियन्त्रितं हि भूतजं न हि सुखास्पदं दृष्टं श्रुतं वा ।

**मदनः**– तत्रतु ममापि न विरोधोऽपितु सम्मतिरेव ।

**भुवनः**– व्यतीता वला, गच्छावस्तावत् । वादे वादे हि जायते तत्त्वबोधः ।

**कठिनाः शब्दाः**

| | |
|---|---|
| प्रतिवेशिनौ = छिमेकी | गमनागमन = यातायात |
| अतिवाहितुम् = बिताउन | द्यावापृथिव्योः = जमीन-आश्मानको |
| विवदन्तौ = छलफल गर्ने | सारल्यम् = सरलता |
| प्राचलत् = चल्यो | परिहृतम् = हरण गरेको |
| अवास्तवम् = ठीक होइन | अकृत्रिमनिर्माणम् = स्वाभाविक उत्पादन (बनावट) |
| प्रयुज्यमानः = प्रयोग गर्ने | सौकर्यम् = सुकरता (सजिलोपन) |
| क्षन्तव्यम् = सहनलायक | वैगुण्यम् = वैगुणता (कृत्रिमता) |
| शुष्कचर्म = सुकेको छाला | सौविध्यम् = सुविधा |
| व्यतीता = बित्यो | नेत्रे निमील्य = आँखा चिम्लेर |
| बेला = समय | |

## अभ्यासः

१. मदनभुवनौ कौ ?
२. मदनभुवनयोः कस्मिन् विषये विवादः ?
३. केन जगति महत्परिवर्तनमानीतम् ?
४. विज्ञानं हि सर्वस्याप्युन्नतेर्मूलं कारणम्, किं खलु सत्यमिदं कथनम् ?
५. विज्ञानं ज्ञानं वा समन्वित रूपं बहुहितकरमस्ति ? विविचत ।

**संस्कृते अनुवादं कुरुत**

तिनले मलाई देख्नेछन् । तिमी घर जानेछौ । हामीहरू कथा सुन्ने छौं । गाईहरू घाँस खानेछन् । म रुपियाँ माग्ने छैन । बाले मलाई बोलाउनुहुनेछ । गुरु रिसाउनुहुने छैन । त्यसले पुस्तक माग्नेछ । चराहरु उड्ने छन् । उसले चिठी लेख्ने छ । म गीत सुन्नेछु । त्यो नाच हेर्नेछ ।

**भाषायामनुवादं कुरुत**

बालकाः क्रीडिष्यन्ति । माता गृहे गमिष्यति । त्वं कार्यं करिष्यसि । अहं पाठं पठिष्यामि । यूयं मां स्मरिष्यथ । भक्तः देवं पूजयिष्यति । कः इमं नेष्यति । अहं वनं प्रवेक्ष्यामि । भगिनी गीतं गास्यति । पिता माम् आज्ञास्यति । आवां जलं पास्यावः । वयं धाविष्यामहे ।

# गुरुशिष्ययोः संवादः

**गुरुः**– अयि गोविन्द ! अपि समाप्तं सन्ध्यावन्दनम् !

**शिष्यः**– आचार्यपाद ! समाप्तं खलु ! सन्नद्धः अहं गुरुचरणानामाज्ञापालने ।

**गुरुः**– अद्य तावदनाध्यायो वर्तते । आगच्छ मया सहोद्यानम् । तत्रहि किञ्चित्कालं विहरावः ।

**शिष्यः**– यद्भवद्भ्यो रोचते तदेव ममापि प्रियकरम् । गच्छावन्तर्हि एतद्भवतां पादुका युगलम् । एषा च वेत्रयष्टिः ।

**गुरुः**– अयि वत्स ! पश्यैतामुद्यानशोभाम् ।

**शिष्यः**– दृष्टा मयापि किलैष । मनोहरं खल्वेतदुद्यानमद्य प्रभाते । पुष्पाणां प्रवहमानो मधुर गन्धो जनानां चित्तं तोषयति । शीतलोवायुर्मन्दंमन्दं प्रवहति, नाशयति च शरीरगत-मालस्यम् । बालसूर्यस्य किरणाः प्रकाशन्ते नाशयन्ति च निशाया अन्धकारम् ।

**गुरुः**– साधूक्तं कुशलेन कुमारेण । प्रसृतोऽनुभवः । प्रभाते हि अभिनवं दृश्यते खलु सकलं विश्वम् ।

**शिष्यः**– भो गुरो ! अस्मिन् वृक्षे एते वानराः विटपाद्विटपमुत्प्लवन्ते कुर्वन्ति च चीत्कारमुच्चैः । कुत्र वर्तते तेषां तेषां गृहम् !

**गुरुः**– न कुत्रापि तेषां गृहम् । कदापि ते गृहं नरचयन्ति ।

**शिष्यः**– किन्नु खलु तस्माद्विटपादुद्गच्छन्ति !

**गुरुः**– मधुमक्षिका एव ते । वानरैश्चालितःस विटपः । तस्मात् ते गृहेभ्य उड्डयन्ते ।

**शिष्यः**– यथार्थमगवतं गुरुवरेणा । अत्रैव खलु मधुमक्षिकाणां मधुकोशो वर्तते । मालाकारेण तस्मात् कोशान्मधु गृहीतम् ।

**गुरुः**– अयि जात ! उपदेशकाः खलु सरघाः जनानाम् । ते हि पुष्पात्पुष्पं भ्रमन्ति चिन्वन्ति च लवशो मधु ।

**शिष्यः**– ननु कैः पदार्थैर्मितोऽयं कोशः )

**गुरुः**– सिक्थेन । एतत् सिक्थं बहूपयुक्तम् । सततमुद्यमशीलाः सरघाः यथा ते मधुनः सञ्चयं लवशः कुर्वन्ति तथा छात्रैरपि ज्ञानस्य सञ्चयः कर्तव्यः ।

**शिष्यः**– अनुगृहीतोऽस्म्येतेन गुरुवचनेन । मधुमक्षिकावत् पिपीलिकाप्युद्यमशीलेत्यहं मन्ये ।

**गुरुः**– बाढम्-समीचीनमनुभूतं त्वया । एते खलु क्षुद्राः प्राणिनः स्वकर्मभिः जनानुपदिशन्तो निर्वहन्ति ।

शिष्यः – अतएव व्यावहारिकाः अनुभविनः कथयन्ति विद्योपार्जनं न केवलं पुस्तकरटनम् । सृष्टेः सूक्ष्मनिरीक्षणमप्यावश्यकमिति ।

गुरुः – युक्तमेवोक्तं तैः । चतुराः खलु व्यावहारिकाः । तेषां सुकथनं ग्रहणीयमेव । अस्तु, अधुना गृहं गच्छावः भोजनस्य वेला सञ्जाता ।

शिष्यः – अस्तु, तर्हि ।

**कठिनाः शब्दाः**

सन्नद्धः=तयार

अनाध्यायः=नपढ्ने दिन

वेत्रयष्टिः=बेतको लट्ठी

प्रसृतः=फैलिएको

सरघाः=मौरी

पिपीलिका=कमिला

चीत्कारम्=चिच्याहट

मधुमक्षिकाः=मौरी

विटपः=हाँगो

मधुकोशः=मौरीघार

सिक्थम्=मैन

## अभ्यासः

१. गोविन्दः गुरोराज्ञया कुत्र गन्तुं सन्नद्धः ?

२. प्रभाते उद्यानस्वरूपं कीदृशम् ?

३. किं वानराणामपि गृहं भवति ?

४. मधुमक्षिकाः कथं मधुसञ्चयं कुर्वन्ति ?

**५. अधस्तन शब्दानां पर्यायो लेख्यः**

(क) वानरः

(ख) मधुमक्षिकाः

(ग) लवशः

**६. के स्वकर्मभिः जनानुपदिशन्ति ?**

चटकाः, सरघाः मशकाः, शशकाः ।

**संस्कृते अनुवादं कुरुत**

तिमी कलम ल्याऊ । तँ पानी पी । हामीहरू इनाम पाऔं । त्यो न डुबोस् । तपाई जानुहोस् । तिमी चाँडै घर जाऊ । हजुरबाट मलाई आज्ञा मिलोस् । हामीहरू उडौं । त्यो बाँचोस् । बहिनी नाचोस् । रूखहरू बढून् ।

**भाषायामनुवादं कुरुत**

सः पाठं पठतु । अहं कार्यं करवाणि । ते पत्रं लिखन्तु । त्वं मां क्षमस्व । देवाः पापं हरन्तु । यूयं वार्ताः शृणुत । पक्षी उड्डीयताम् । बालका नृत्यं पश्यन्तु । हंसाः जलं पिबन्तु । त्वं न गच्छ ।

# आवेदनपत्रम्

चम्पापुर ग्रामात्

श्रीमत्सु प्रधानाध्यापक महोदयेषु ...........

सविनयं निवेदनम् ।

महोदया: ?

अहमिदानीं बलवता ज्वरेणाऽकस्मादाक्रान्तोऽस्मि । पञ्चभिर्दिनैः शय्यामधिशयान इतस्ततश्चलितुमपि नशक्नोमि । उपस्थिति पुस्तिकायां मम रुग्णां स्थितिं ज्ञापयितुं सविनयं प्रार्थये । भिषजः प्रमाणपत्रं पश्चात् स्वयमानेष्यामि । इदानीन्तन खण्डितपाठपूरणेऽनन्तरं प्रयतिष्यामि । आशासे प्रार्थनापत्र स्वीकारेणाहमनुगृहीतो भवेयम् ।

विनीतस्य

स्थानम्... ... ... अष्टमकक्षाध्यायिनः

दिनाङ्क... ... .. देवदत्तशर्मणः

## अभ्यासः

१. केभ्यः आवेदनं लिख्यते ?

२. आवेदने कर्गजपरिमार्जनमावश्यकम् ?

३. सर्वकारं सम्बोध्य छात्रवृत्तय एकमावेदनपत्रं लिखत ।

# पुत्राय पितुः पत्रम्

**गोरक्ष नगरात्**

चिरञ्जीवि पुत्र हरिदत्तशर्मन् ! ............ दिने

अत्र वयं सर्वे कुशलिनः । त्वां निरामयं चिन्तयामि । त्वया प्रेषितं पत्रं ह्य एव मम हस्तगतम् । अहं कतिपयैर्दिनैर्बहिर्गत आसम् । अतः पत्र प्रापणे प्रेषणे च विलम्बो जातः ।

इदानीन्तन प्रतिभापरीक्षायां समुत्तीर्य पुरस्कारभागभवमिति श्रुत्वा नितरां मुदितोऽस्मि । अतः परमपि पठने तथैव निरतो भूया इति आशासे । परमेतदपि अविस्मरणीयम्, यत् सुस्वास्थ्यं विना सुपठनं न सम्भवतीति । स्वास्थ्य रक्षार्थं नियमिताऽऽहारविहारौ आवश्यकौ । अपथ्य भक्षणं यथाऽस्वास्थ्यकरं तथैवाभक्ष्यभक्षणभवद्य चिन्तनञ्च मतिमान्द्यकरमेव । एतत्सर्वं विचार्यैव कार्यं करणीयम् । इदानीं पञ्चशत रुप्यकाणि प्रेषितानि सन्ति शीतावकाश समये शीघ्रमागन्तव्यम् । तव माता प्रतिदिनं त्वां स्मरति । विरमामि इदानीम् ।

तव स्नेही पिता

**विश्वनाथः**

अभ्यासः

१. स्ववृत्तान्तं दूरे कथं प्रेष्यते ?

२. पत्रं प्रेषणे के–के विषया अविस्मरणीयाः ?

३. जनकपुरस्थं स्वमित्रमभिलक्ष्य पत्रमेकं लिखत ।

# इयं संस्कृत भाषा

या भाषा परिमार्जिता सुसंस्कृता च विद्यते सा संस्कृत भाषा। व्याकरणसम्बन्धिदोष रहिता व्यवस्थित क्रियाकारक विभाग समन्विता या सा संस्कृत भाषेत्यपि कथयितुं शक्यते। इयं भाषा सर्वगुणमयी। देवा अपि अनयैव भाषया व्यवहरन्ति। अतएव इयं देवभाषा, गीर्वाणवाणी, अमर भाषेत्यादिभिः शब्दैर्व्यवह्रियते। भाषागतमुदारत्वं, मार्दवं, मनोज्ञञ्चास्या वैशिष्ट्यम्।

सेयं संस्कृत भाषा जगतः सर्वासु भाषासु प्राचीनतमा। व्यतीतेष्वपि बहुषु वर्षेषु अस्या माधुर्यम् उदारत्वञ्च नाद्यपि विकृतमस्ति। सर्वासामार्यभाषाणामुत्पत्तिः अतएव बभूव। प्राचीनकाले भूमण्डलस्य बहुषु क्षेत्रेषु संस्कृतभाषैव लोकभाषा आसीत्। पूर्वस्यां वाली, यव (जावा) सुमात्रादि देशेषु प्राप्तेभ्यः शिलापत्रेभ्यो ज्ञायते चतुर्दश शताब्द्या पूर्वं संस्कृतभाषा राष्ट्रभाषाऽवर्तत। उत्तरस्यां समरकन्द, उज्वेक प्रान्तेषु व्यवह्रियमाणा भाषाद्यत्वेऽपि संस्कृतमयी। भारत, ब्रह्मा, नेपाल देशेषु तु किंकथनीयं संस्कृत भाषा सम्बन्धे। अत्रस्थं समस्तं प्राक्तनं साहित्यं शिलापत्रादिकञ्च संस्कृत भाषायामेव सन्ति। मानवानां कर्तव्याकर्तव्ययोः प्रथमोद् बोधकाः वेदा एव। वेदनिर्दिष्टानां कर्मणां व्याख्यातारो ब्राह्मणग्रन्थाः तदनु अध्यात्मविषयप्रतिपादिका उपनिषदा विद्यन्ते। वेद व्याख्यानभूतानां श्रौतसूत्राणां, गृह्य सूत्राणां महत्त्वमपि नाल्पतरम्। वेदाङ्गानां शिक्षा, कल्प, व्याकरणादीनां, तत्त्वोपदेशकानां दर्शनानां ग्रन्था अपि संस्कृते अविस्मरणीयाः। महर्षि वाल्मीकि रचितस्य रामायणस्य, व्यास रचितस्य महाभारतस्य निर्माणन्तु अपूर्वं घटनैव विद्यते विश्वसाहित्ये। यत्र दुर्लभस्य कवित्वस्य नैसर्गिक सौन्दर्यस्य, अध्यात्मज्ञानस्य, नीतिशास्त्रस्य च दर्शनं जायते। अश्वघोषः, कालिदासः, भवभूतिः, बाणः, श्रीहर्षः प्रभृतयोः महाकवयो नाट्यकाराश्च संस्कृते प्रसिद्धाः। येषां रचनाकौशलं दृष्ट्वा सरसत्वमास्वाद्य मुग्धा भवन्ति रसिकाः। कविवराणामेतेषां वर्णने विद्वांसोऽपि न क्षमाः किमुतान्ये! ये श्रीमद्भगवद्गीता, स्मृतिग्रन्थाः, पुराणानि च संस्कृतस्य महात्म्यं वर्णयन्ति।

संस्कृतवाङ्मयस्य बोद्धारो रसिकाश्च न केवलं पौरस्त्या अपि तु पाश्चात्या अपि। यैः संस्कृतमधीतम् आधुनिकरीत्याऽन्वेषणं कृतम्, तद्गतं गाम्भीर्यञ्चानुभूतं। ते पाश्चात्यदेशीया विद्वांसः सर विलियमजोन्स्, कीलहर्न. मैक्समूलर, मैकडानल, कीथ प्रभृतयः प्रसिद्धाः। येषां सम्पर्केण द्वीपान्तरेष्वपि संस्कृतस्य क्षेत्र विस्तारो जातः। अद्यत्वे विकसितेषु पाश्चात्येदेशेषु जापान रूस प्रभृतिषु एशिया देशेषु च संस्कृतस्य प्रचार प्रवर्धमानः अस्ति।

संस्कृत भाषा हि कामधेनु रूपा। इमां यः कोऽपि आत्मभावनया श्रोतुं, पठितुं, मन्तुं च शक्नोति। अस्या माध्यमेन स्वात्मविषतकमुपनिच्छास्त्रम्, कर्म–भक्ति ज्ञान रूपं गीता शास्त्रम्, रसमयं काव्यशास्त्रञ्चाधीत्य परां निवृत्तिमाप्नोतुं शक्नोति।

**कठिनाः शब्दाः**

| | |
|---|---|
| परिमार्जितः=माझिएको | आस्वाद्य=स्वाद लिएर (चाखेर) |
| सुसंस्कृतः=संस्कार गरिएको | बोद्धारः=जान्ने, बुझ्ने |
| समन्विता=युक्त | कामधेनुः=चाहेको कुरा दिने |
| मार्दवम्=कोमलता | स्वात्मविषयक=आत्माको विषय भएको |
| उद्‌बोधकाः=बुझाउने | परां निर्वृत्तिम्=ठूलो आनन्द |

## अभ्यासः

१. का संस्कृत भाषा ?

२. संस्कृत भाषायाः कानि अन्य नामानि ?

३. सर्वासामार्यभाषाणां जननी का ?

४. नेपाले प्राचीन शिलापत्राणि कस्यां भाषायां लिखितानि ?

५. भूमण्डलेषु प्राचीनग्रन्थाः के ?

६. के पाश्चात्याः संस्कृताध्येतारः ?

**संस्कृते अनुवादं कुरुत**

मैले त्यसलाई दुई आँखाले देखें। हामीहरू नाकले पानी पिउँदैनौं। विद्याले ज्ञान बढ्छ। त्यसले मलाई कलम दिनेछ। गुरुले मलाई पाठ दिनुभएन। हामी देवतालाई फूल चढाउँछौं। त्यो मलाई पढ्न बोलाउँछ। ती दुई खानलाई फल ल्याउँछन्। रूखबाट पातहरू झर्छन्। उनीहरू पर्वतबाट ओर्ले। बालक बिरालोदेखि डराउँछ। यिनी ढोकाबाट बाहिर निस्किन्नन्। कैदी जेलखानबाट भाग्यो। म पुस्तकको निमित्त जान्छु। आमाले बहिनीलाई लड्डू दिनुभयो।

**भाषायामनुवादं कुरुत**

त्वं देवान् शिरसा नमसि। पुष्पम् आतपेन शुष्यति। माया गोमयेन गृहं लिम्पति। भटाः शस्त्रैः शत्रून् जयन्ति। वयं त्वां नेत्राभ्यां पश्यामः। शिल्पी इष्टकाभिः गृहं रचयन्ति। त्वं मह्यं पुस्तकं देहि। भृत्यः कार्याय निर्गच्छत्। त्वं कस्मै लेखनीं दास्यसि? वयं भवद्भ्यः पुस्तकानि समर्पयिष्यामः। अहं तुभ्यं किं ददानि। भगिनी श्वशुरात् लज्जते। ईश्वरः सङ्कटात् रक्षति। चौराः गृहात् पलायन्त। पुस्तकं हस्तात् अपतत्।

# गौः



विधात्रा सृष्टेषु प्राणिषु गौः स्तनपायिनी मेरुदण्डवती च। अस्याश्चत्वारः पादः, द्वे श्रृङ्गे, एकं लाङ्गूलञ्च भवन्ति। इयं आत्मरक्षायै शृङ्गयो., कर्णौ रोमशं पुच्छञ्च दंशमशकान् निवारियतुं प्रयुङ्क्ते। अस्या गले सास्ना विशेषलक्षणं भवति। अनया लक्षणया गावो महिषीभ्यो पृथक क्रियन्ते। एतासां मुखं दीर्घतुण्डम्, प्रतिपादं द्वेशफे, दन्ताश्चैकतः भवन्ति। आकृतिश्चतुः पञ्च हस्त दीर्घा, त्रिचतुरहस्तोच्चा प्रायेण। जीवनकालस्तु साधारणतः विंशति पञ्चविंशति वा-वर्षाणि।

सर्व प्रदेशेषु लभ्यन्ते गावः। परं देश भेदेन जाति भेदेन च तासु कियदपि वैषम्यं प्राप्यते। अस्मददेशे पर्वत प्रान्तीय गावः ह्रस्वाकाराः स्वल्पदुग्धदाश्च भवन्ति। परं ता लघु देहतया स्वल्पकेनापि तृणादिना तुष्यन्त्यो नाति पयस्विन्योऽपि घनदुग्ध रसेन सुमधुरमास्वादं वितरन्ति। समतल प्रदेशस्थास्तु स्निग्ध प्राय भोजनाः घटोघ्न्यो बहुदुग्धदाश्च भवन्ति। वर्णतस्तु ताः कृष्णाः कपिलाः श्वेताः कर्पूराश्चनैकविधाः। तृणं पलालमन्नादिकञ्च गवां प्रमुखं भोजनम्।

पुंव्यक्तयो गावः वत्सः, वत्सतरः, बालः, बृषः, महोक्षशब्दैः, स्त्री व्यक्तयस्तु वत्सा, वत्सतरी, बाला शब्दैर्व्यवह्रियन्ते। गुणभेदेन अन्यान्यपि गवां नामानि। यथा चिरप्रसूतां, वस्कयिणीं, बन्ध्यां, वशां, गर्भोपघातिनीं वेहदं, प्रसूतां धेनुं, बहुक्षीरा पयस्विनी वदन्ति लोकाः। कृषि प्रधान देशे तु सर्वस्वं गाव एव। यतो गो जाताः वृषाः हलैः भूमि कर्षन्ति, शकृद्भिर्मलं ददानाः उर्वरां कुर्वन्ति। ततः उप्तानि बीजानि यदा प्रवृद्धं परिपक्वञ्च भवति तदा वृषैरेव तत्सं-शोध्यते, संशोधितं शकटादिद्वारा गृहं प्रापयन्ति। एवं हलेषु, शकटीषु शकटेषु च प्रयुज्यमानाः वृषाः कर्षणं कुर्वन्ति भारं वहन्तो बहूपकुर्वंति।

अन्नाद् व्यतिरिक्तं पौष्टिकं पेयं खाद्यञ्च गाव एव प्रयच्छन्ति। तृणानि चरन्ती गौ अमृतकल्पं दुग्धं वितीर्य जननीव लोकानाप्याययति। जातमात्रस्य शिशोर्मातृस्तन्यातिरिक्तं पौष्टिकं पेयं गोदुग्धमेव।

यथा माता पुत्रं सर्वतो रक्षति, पालयति, प्रीणयति च, तथैव गौरपि मानवान् दुग्धादिना सम्वर्धयति। भर्त्सिता ताडिता अपि गौः न विरज्यते नापि कुत्रापि गच्छति। किन्तु सर्वात्मना सुखमेव साधयति सर्वेषाम्। अतएव **"गावो विश्वस्य मातरः"** इत्युक्तिः स्वाभाविकी। दुग्धाद्दधि, दध्नो नवनीतं तक्रञ्चोपजायते। नवनीतं वन्हौ क्षारितं घृतं सम्पद्यते। पयो दधि घृतानि गव्यानि पवित्रतमानि स्वादूनि बहुगुणानि च। येभ्यः शतशो मिष्टान्नानि भोज्यानि च निर्वर्त्यन्ते।

ऐहिक पारलौकिक श्रेयः साधनीभूतस्य धर्मस्य प्रधानं साधनं च गाव एव। यतः गव्यैरेव पदार्थैः सम्पद्यते यज्ञः। गवामेव दुग्धदधि घृतादिभिः साधनैः सम्पन्नेन पञ्चामृतेन भवति देवतानां पूजनम्। आशौचान्ते प्रायश्चित्तेष चान्तर्बहिः शुद्धिमभीप्सुभिरुपयुज्यतं गवामेव पयो दधि घृत मूत्र गोमयमयं पञ्चगव्यम्। न तन्मात्रम्। किन्तु अन्तःकरण मलानां कामक्रोधादीनां, शारीरिकाणां धातुवैषम्य जनितानामतिदूषितानामपि रोगाणां परमं शोधकं निवारकञ्चास्ति तत्। सत्यमिदम्। तथाच **"गावः स्वस्त्ययनं महत्"** इत्युक्तिः प्रसिद्धाः।

स्वगुणगणैर्गावः सर्वै पालनीयाः रक्षणीयाश्च। ततोऽपि हिन्दूनां कृते तु ता अधिकं पूज्यतमाः। प्राचीनकालादेव तेषां भावना **"गावोममाग्रत सन्तु गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्"** ईदृशी आशीत् हिन्दू राष्ट्रं खलु नेपालः। अत्र गवां पालनं संरक्षणञ्च स्वाभाविकम्। सर्वकार नियमै नेपाले गावः अबध्याः घोषिताः। वेदेषु गोविषये उल्लिखितं प्राप्यते यत् इयं गौरघ्न्या इति। अघ्न्या शब्दोऽबध्य बोधकः। तथा च गोविषये वैदिकानामवध्यभावना प्रसिद्धा। नेपालस्य राष्ट्रिय पशुरपि गौरेव। इत्थञ्च सर्वदृष्टयैव गावः अस्माकं संरक्षणीया मातरः।

**कठिनाः शब्दाः**

| | |
|---|---|
| स्तनपायिनि = दूध पिउने | न विरज्यते = विरक्त हुन्नन् |
| मेरुदण्ड = ढाड | क्षारितम् = पगालिएको |
| रोमशः = रौं भएको | निर्वर्त्यन्ते = बनाइन्छन् |
| लाङ्गूलम् = पुच्छर | अन्तर्बहिः = भित्रबाहिर |
| दीर्घतुण्डम् = लामो थुतुनु भएको | स्वस्त्ययनम् = कल्याणकारक |
| द्वे शफे = दुई खुर | अबध्य = मार्न नहुने |
| ह्रस्वाकाराः = साना गाँठीका | नातिपयस्विन्यः = धेरै दूध नदिने |
| वस्कयिणीम् = ब्याएको समय धेरै भैसकेको | वंशा = बाँझी |
| वेहदम् = तुहेकी | धेनुः = भरखरै ब्याएकी |
| पयवस्विनी = धेरै दूध दिने | पौष्टिकम् = पुष्ट पार्ने |

## अभ्यासः

१. (क) गौः कीदृशी पशुः ?

(ख) किं गवां विशेषलक्षणम् ?

(ग) पर्वतीय गोभ्यः समतलस्था गावः कथं भिन्ना ?

(घ) कति प्रकाराः गावो दृष्टा त्वया ?

२. वृषाः कति विधैः कार्यैः मनुष्यानुपकुर्वन्ति ? दशभिः पङ्क्तिभिः निरूपयत ।

३. अन्य दुग्धेभ्यः गोदुग्धस्य वैशिष्ट्यं किम् ?

४. भेदं निरूपयत

(क) धेनुः, पयस्विनी, वस्कयिणी

(ख) वत्सा, वत्सतरी, बाला, वृषः ।

५. अघ्न्या शब्दः कुत्र प्रयुक्त कश्च तदर्थः ?

### संस्कृते अनुवादं कुरुत

हामीहरू चाँडै घर जान्छौं । असल विद्यार्थी चित्त लगाएर पढ्छन् । बहिनीहरू राम्रो गीत गाउँछन् । राम दुई हातले पुस्तक लैजान्छ । तिनीहरू दुई कानले कथा सुन्छन् । दाता गरीबलाई अन्न बाँड्छन् । तपाईंले त्यहाँ के देख्नुभयो । राम श्यामसित रिसायो । गोपाल ठीक समयमा घरबाट पढ्न निस्कन्छ । दशरथका चार छोरा थिए । पशुपतिका पाँच मुख छन् । हाँसहरू पानीमा पौडन्छन् । बगैंचामा फूलहरू ढकमक्क फुलेका छन् । ए हरि ! तिमी किन हिजो नआएको । वसुदेवले कृष्णलाई गोकुल पुऱ्याए । सुदामासित उनको गहिरो प्रेम थियो ।

### भाषायामनुवादं कुरुत

चतुरः छात्रः गुरुं तोषयति । रम्या वार्ता जनान् तोषयति । त्वं पुष्पवाटिकां गत्वा पुष्पाणि आनय । छात्राः चत्वरे कन्दुकेन क्रीडन्ति । दीनेभ्यः दयां कुरुः । कृष्णः कंसाय कुप्यति । पिपीलिकाः विलात् निस्सरन्ति । अस्मिन् पिप्पलवृक्षे चिरात् कपोत दम्पती निवसतः । दुर्जनसंसर्गं परित्यज्य सुजनसङ्गं भज । यूयं मातापित्रोः उपदेशं स्मरत । यः समये शेते, जागर्ति, विहरति च स एव निरामयं स्थातुं प्रभवति । साम्प्रतं विविधानि यानानि गगने उड्डीयन्ते । सः परिश्रमेण प्रतिज्ञां पर्यपूरयत् । दुष्टः स्वभावेनैव परदुःखा सहिष्णुः भवति । गुणी एकः पुत्रः पुत्र शतात् वरम । पर्वतात् नदी वेगेन वहति ।

# रघुवंशः

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥१॥

**व्याख्या**– सः= दिलीपात्मजः रघुः, गुरुणा= जनकेन दिलीपेन, दत्तं= प्रदत्तम्, राज्यं=राज्ञः प्रजापालनादिकं कर्म, प्रतिपद्य=लब्ध्वा, दिनान्ते= दिवसावसाने सन्ध्याकाले इत्यर्थः । सविता=सूर्येण, निहितं =आहितम् समर्पितं वा, तेजः= द्युतिम्, प्रतिपद्य= प्राप्य, हुताशनः इव =वह्निः इव, अधिकं =अत्यन्तम्, बभौ =शुशुभे ॥१॥

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥२॥

**व्याख्या**– वसुन्धरा = वसुमती, मनुप्रभृतिभिः= मन्वित्यादिभिः, मान्यैः=पज्यैः, राजभिः= भूपतिभिः, भुक्ता यद्यपि=यद्यपि उपभोगविषयीकृता, अनुभूतेत्यर्थः । तथापि = भोगविषयीकृतापि, तस्मिन् = रघौ, अनन्यपूर्वा इव =अनन्योपभुक्तेव, आसीत् =बभूव ॥२॥

पञ्चानाममि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥३॥

**व्याख्या**– पञ्चानां= पञ्चसंख्यकानाम्, भूतानां पृथिवी – जल–तेजो–वायुनभसाम्, अपि= समुच्चये, गुणाः = गन्ध–रस–रूप–स्पर्श–शब्दाः, उत्कर्षं = समुन्नतिम्, पुपुषुः=प्रवर्धयामासुरिति भावः । तस्मिन्, नवे=नवीने, महीपाले= भूपतौ, रघौ, सर्वं= अखिलम्, नवमिव=अभिनवमिव, अभवत्=सञ्जातम् ॥३॥

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
यथैव सो भूदन्वर्थो राजा प्रकृतिञ्जनात् ॥४॥

**व्याख्या**– यथा = येन प्रकारेण, चन्द्रः = चन्द्रमा, प्रल्हादनात्= आल्हादनात्, अन्वर्थः =सार्थकनामा (चन्द्रयति आल्हादयतीति चन्द्रः) अभूत्= अभवत् । यथा= येन प्रकारेण तपनः=सूर्यः, प्रतापात्=प्रकृष्टतापजननात् अन्वर्थः=अनुगतार्थनामकः (तपति इति तपनः) अभूत्, तथैव =तेनैव प्रकारेण, सः = रघुः, राजा = प्रजारञ्जकः, प्रकृतिरञ्जनात्= प्रजानुरञ्जनात्, अन्वर्थः= यथार्थनामा (रञ्जनात् राजा) अभूत् = समभवत् ॥४॥

स गुप्तमूलप्रत्यन्त शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥४॥

**व्याख्या** – गुप्तमूलप्रत्यन्तः = गुप्तौ सुरक्षितौ मूलम् =स्वकीयनिवासस्कताम्, प्रत्यन्तः प्रान्तस्थ दुर्गं च येन सः शुद्धपार्ष्णिः=समुत्पाटितपृष्ठारिः, अयान्वितः= सौभाग्यवान्, सः= रघुः, षड्विधम् =षट् प्रकारकं, बलम् =सैन्यम्, आदाय = अग्रेकृत्वा, दिग्जिगीषया= दिशां जेतुमिच्छया, प्रतस्थे = प्रस्थितः, संचालेति भावः ।।५।।

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनर्वाहिषा ।
अहितानानिलोद्धूतैस्तर्जयन्निव केतुभिः ॥६॥

**व्याख्या**– प्राचीनर्वाहिषा = इन्द्रेण तुल्यः, सः = रघुः, अनिलोद्धूतैः= पवनप्रचलितैः, केतुभिः= ध्वजैः, अहितान् =शत्रून् अपकारकारिणः, तर्जयन्निव = भर्त्सयन् इव, प्रथमम् =पूर्वम्, प्राचीं= पूर्वदिशाम्, ययौ=जगाम ॥६॥

प्रतापोऽग्रे ततः शब्दा परागस्तदनन्तरम् ।
ययौ प्रश्चाद्रथादीति चतुः स्कन्धेव सा चमुः ॥७॥

**व्याख्या**– अग्रे = पुरतः, प्रतापः= तेजोविशेषः, ततः = तत्पश्चात्, शब्दः= सेनाध्वनिः, सैन्यकलकलः इति भावः । तदनन्तरम् = ततः परम्, परागः = (चतुरंगिणी सेनारथोत्य) धूलिः, पश्चाद् =पृष्ठे, रथादि = स्यन्दनादि इति, चतुःस्कन्धेव = इत्यनेनैव प्रकारेण चतुःस्कन्धेव चतुर्व्यूहेव, सा चमूः = प्रसिद्धि गता रघुसेना, ययौ = प्राचीं दिशमभिजगाम ।।७।।

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥८॥

**व्याख्या** – जयी= विजयशीलः रघुः, एवम इत्थम् = पूर्वोक्त प्रकारेण, पौरस्त्यान्= प्राच्यान्, तान् तान्=प्रमुखान्सर्वानपि,जनपदान्=देशान्, आक्रामन्=जयमानः,तालीवनश्यामम् =तालीवनैः तालतरुसमूहैः, श्यामम् = कृष्णवर्णम्, महोदधेः = महासागरस्य, उपकण्ठम् समीपम्, प्राप= प्राप्तवान् ॥८॥

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोन्तरेषु सः ॥९॥

**व्याख्या** – नेता = नायकः स रघुः, नौसाधनोद्यतान् =नौभिः साधनै उद्यतान्= सन्नद्धान् नाविकसैन्योपकरणैः युद्धाय तत्परानिति भावः । वङ्गान् = वङ्गदेशीयनृपान्, तरसा = बलपूर्वकम्, उत्खाय = समुन्मूल्य पराजित्येति यावत् । गङ्गास्रोतोन्तरेषु = गङ्गाः देवनद्याः स्रोतसाम् प्रवाहाणाम् अन्तरेषु मध्येषु, जयस्तम्भान् = विजयप्रतीकस्वरूपान् स्थलान्, निचखान= निगडितवान् स्थापयामास ॥९॥

ततो वेलातटेनैव फलवत्पूगमालिना।
अगस्त्याचरितामाशामनाशास्य जयो ययौ ।।१०।।

**व्याख्या**– ततः = पूर्वदिग्विजयानन्तरम्, फलवत्पूगमालिना = सफलक्रमुकपंक्तिमता, वेलातटेनैव = सागरतीरेणैव. अगस्त्याचरिताम् = अगस्त्येन कुम्भजेन आचरिताम् = संचरिताम्, आशाम् = दिशाम् दक्षिणदिशमित्यर्थः। अनाशास्यः जयः = अतर्कनीयविजयः सन्, ययौ = समाचलत् ।।१०।।

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ।।११।।

**व्याख्या**– ततः = केरलविजयानन्तरम्, सः = रघुः, संयमी = योगी, तत्त्वज्ञानेन = परमार्थस्वरूप बोधेन, इन्द्रियाख्यान् = इन्द्रियेतिनाम्ना प्रसिद्धान्, रिपून् इव = अरीन् इव, पारसीकान् = पारसीदेशनृपान्, जेतुं = विजेतुम्, स्थलवर्त्मना = स्थलस्य भूमेः वर्त्मना मार्गेण, प्रतस्थे = संजगाम । प्राचीनकाले समुद्रयात्रा शास्त्रवर्जिता आसीत् इति हेतोः सत्यपि सामुद्रिके मार्गे स्थलमार्गमेवानुसृतवान् रघुः ।।११।।

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्
शरैरुस्रैरिवोदिच्यानुद्धरिष्यन् रसानिव ।।१२।।

**व्याख्या**–ततः पारसीकानां विजयानन्तरम् रघुः, भास्वान् = सूर्यः, शरैः = बाणैः, उस्रैः प्रखरकिरणैः इव, उदीच्यान् = उत्तरदिशायां सम्भवान् नृपान्, रसानिव = सलिलानीव, उद्धरिष्यन् = समुन्मूलयिष्यन् सूर्यपक्षे समाग्रहीष्यँश्च, कौबेरीम् = कुबेरसम्बन्धिनीम्, दिशाम् = उत्तराशामिति भावः। प्रतस्थे = अभिययौ। रघुः सूर्य इव उत्तरदिग्विजयार्थं चचाल इति भावः ।।१२।।

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ।।१३।।

**व्याख्या**– ततः = तत्पश्चात्, अश्वसाधनः = घोटकोपकरणः सन् (कम्बोजाधिपतिना सदश्वलाभादिति ज्ञेयम्) सः = रघुः, गौरीगुरुम् = गौर्याः पार्वत्याः गुरुं पितरम् हिमालयम्, शैलम् = पर्वताधिराजम्, उद्धूतैः = वाजिशफोत्थापितैः, धातुरेणुभिः = धातूनां पर्वतीयगैरिकादीनाम्, रेणुभिः = रजोभिः, तत्कूटान् = तस्य हिमालयस्य कूटान् = शिखरभागान्, वर्धयन् इव = अभिवृद्धिं कुर्वन् इव, आरुरोह = आरोहणं कृतवान् ।।१३।।

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम्।
रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ।।१४।।

व्याख्या– जिष्णुः = जयनशीलः (सः=रघुः) इति– पूर्वोक्तप्रकारेण, दिशः = ककुभः सर्वदिग्स्थितान् भूपान् इति भावः। जित्वा=जयं कृत्वा, रथोद्धतम्= रथैः स्यन्दनैः उद्धतम्= समुत्थापितम्, रजः=धूलिम्, छत्रशून्येषु, = छत्रविहीनेषु, (पराजितानां नृपाणां निश्छत्रत्वात्) राज्ञाम्=नृपाणाम् मौलिषु=किरीटेषु, विश्रामयन्+संस्थापयन् संक्रामयन्नितिवार्थः। न्यवर्तत=अयोध्यां प्रत्यागतः ॥१३॥

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥१५॥

व्याख्याः– सः=रघुः, सर्वस्वदक्षिणम्=सर्वस्वदक्षिणा यस्य तम्, विश्वजितम्=विश्वजिन्नामकम्, यज्ञम् = अध्वरम्, आजह्रे = कृतवान्, अथार्थान्तरेण समर्थयते । सताम् = सज्जनानाम्, वारमुचामिव=नीरदानामिव, आदानम् = संग्रहणम्, विसर्गाय हि, त्यागाय=दानाय एव भवतीति शेषः । यथोक्तं कविना पूर्वस्मिन्प्रथमे सर्गे त्यागाय सम्भृतार्थानां यशसे विजिगीषूणामित्यादिना ॥१५॥

(चतुर्थ सर्गात्)

## अभ्यासः

१. रघुः गुरुणादत्तं राज्यं प्राप्य कथं बभौ ?
२. "राजा" इतिपदं कथमन्वर्थो भवति ?
३. रघुः प्रथमं कुत्र विजयाय ययौ ? कथञ्च ?
४. रघोः सेना कथं चतुःस्कन्धेवादृश्यत ?
५. निम्नाङ्कितपदानामर्थाः लेख्याः

(क) अनन्य पूर्वेव
(ख) गुप्तमूल प्रत्यन्तः
(ग) निचखान
(घ) कौबेरीं दिशम्
(ङ) गौरीगुरुम्

६. 'आदानं हि विसर्गाय' इत्यस्याशयं प्रकटयत ।

# नीतिश्लोकाः

१. धनिकः श्रोत्रियोराजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ।।

२. यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति ह्यध्रुवं नष्टमेव हि ।।

३. विषदप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नदुष्कुलादपि ।।

४. परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।।
वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् ।।

५. पुत्राश्च विविधैः शीलैः नियोज्याः सततं बुधैः ।
नीतिज्ञाः शीलसम्पन्ना भवन्ति कुल पूजिताः ।।

६. माताशत्रुः पितावैरी येन बालो नपाठितः ।
नशोभते सभामध्ये हंसमध्ये बकोयथा ।।

७. कस्य दोषः कुले नास्ति व्याधिना के नपीडिता ।
व्यसनं केन नप्राप्तं कस्य सौख्यं निरन्तम् ।।

८. रूपयौवनसम्पन्ना. विशालकुलसंभवाः ।
विद्याहीना नशोभन्ते निर्गन्धा इव किंशुकाः ।।

९. कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ।।

१०. ऋणकर्ता पिता शत्रुः माता च व्यभिचारिणी ।
भार्यारूपवती शत्रुः पुत्रशत्रुरपण्डितः ।।

११. अधमाः धनमिच्छन्ति धनंमानं च मध्यमाः ।
उत्तमाः मानमिच्छन्ति मानो हि महतां धनम् ।।

१२. शान्तितुल्य तपो नास्ति न सन्तोषात्परं सुखम् ।
नतृष्णाया परो व्याधिः न च धर्मोदयापरः ।।

१२. येषां न विद्या न तपो न दानं ज्ञानं नशीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुविभारभूताः मनुष्यरूपेण मृगाश्चरन्ति ।।

१४. पुस्तकेषु च या विद्या परहस्तगतं धनम ।
कार्यकाले समुत्पन्ने न सा विद्या नतद्धनम् ।।

१५. न निर्मिता के नदृष्टपूर्वा नश्रूयते हेममय कुरङ्गः ।
तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ।

## अभ्यासः

१. कुत्र दिवसमपि नवसेत् ?

२. कीदृशं मित्रं परित्यजेत् ?

३. के नराः भूविभारभूताः ?

४. उत्तमाः जनाः किमिच्छन्ति ?

**५. आशयं प्रकाशयत**

(क) कः परः प्रियवादिनाम ?

(ख) विनाशकाले विपरीत बुद्धिः

(ग) बालादपि सुभाषितम्

(घ) न च तृष्णा समोव्याधिः

# व्याकरणम्

## १. संज्ञाप्रकरणम्

श्रीगणेशाय नमः

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥

अइउण् १। ऋऌक् २। एओङ् ३। ऐऔच् ४। हयवरट् ५। लण् ६। ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४॥

इति माहेश्वराणि प्रत्याहार सूत्राणि अणादिसंज्ञार्थानि ।

### अथस्थानानि

अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिव्हामूलम्। नासिकाऽनुस्वरस्य।

### पदसंज्ञा

सुप्तिङन्तं पदम् १।४।१४।

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥

इति संज्ञाप्रकरणम् ।

अभ्यासः

१. निम्नाङ्कितानां प्रत्याहार रूपाणि समुल्लिखत

२. अधस्तन वर्णानां स्थानं निरूपयत

(क) अक्

(ख) अट्

(ग) एङ

(घ) झय्

अधस्तन वर्णानां स्थानं निरूपयत

घ, ल, ड, श, औ, व,

# अच्सन्धिः

**इको यणचि ६ । १ । ७७ ॥**

इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥

**आद्गुणः ६ । १ । ८७ ॥**

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥

**वृद्धिरेचि ६ । १ । ८८ ॥**

आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् ॥ कृष्णौत्कण्ठ्यम् ॥

**अकः सवर्णे दीर्घः ६ । १ । १०१ ॥**

अकः सवर्णेऽचिपरे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ।

# हल्सन्धिः

**स्तोः श्चुना श्चुः ८ । ४ । ४० ॥**

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥

**झलां जशोऽन्ते ८ । २ । ३९ ॥**

पदान्ते झलां जशः स्युः । वागीशः

**ङमो ह्रस्वादचि ङमुण् नित्यम् ८ । ३ । ३२ ॥**

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥

**शश्छोऽटि ८ । ४ । ६३ ॥**

पदान्तात् झयः परस्य शस्य छो वा स्यादटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः, तच्शिवः । (छत्वमिति वाच्यम्) तच्छ्लोकेन ॥

**मोऽनुस्वारः ८ । ३ । २३ ॥**

मान्तस्य पदस्यानुस्वारः स्याद्धलि । हरिं वन्दे ॥

# विसर्गसन्धिः

**वा शरि ८।३।३६ ॥**

शरि विसर्गस्य विसर्गो वा स्यात् । हरिः शेते, हरिश्शेते ।

**अतो रोरप्लुतादप्लुते ६।१।११३ ॥**

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ॥

**रो रि ८।३।१४ ॥**

रेफस्य रेफे परे लोपः स्यात् ।

**ढ्लोपे पूर्वस्य दीर्घोऽणः ६।३।१११ ॥**

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् ? तृढः । वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ।

इति सन्धिप्रकरणम्

अभ्यासः

१. के गुणाः=? काश्च वृद्धयः ?

२. सन्धिस्वरूपं लिखत

(क) देव + इन्द्रः
(ख) रमा + ईशः
(ग) राम + ऐश्वर्यम्
(घ) देवी + उवाच
(ङ) कृष्णस् + शेते
(च) जगत् + गुरुः
(छ) तत् + श्रणु

# अथ सुबन्तप्रकरणम्

## अथ अजन्तपुँल्लिङ्गप्रकरणम्

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५ ॥**

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥

**कृत्तद्धितसमासाश्च १।२।४६ ॥**

कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञकाः स्युः ।

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२ ॥**

सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ।।

**ङ्याप्प्रातिपदिकात् ४।१।१ ॥**

**प्रत्ययः ३।१।१॥**

**परश्च ३।१।२॥**

इत्यधिकृत्य। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥

**सुपः १।४।१०३ ॥**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ।

**द्व्येकयोर्द्विवचनैकवचने १।४।२२ ॥**

द्वित्वैकत्वयोरेते स्तः ॥

**विरामोऽवसानम् १।४।११० ॥**

वर्णानामभावोऽवसानसंज्ञः स्यात्। रुत्वविसर्गौ । रामः ॥

**सरूपाणामेकशेष एकविभक्तौ १।२।६४ ॥**

एकविभक्तौ यानिसरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।।

**प्रथमयोः पूर्वसवर्णः ६।१।१०२ ॥**

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते ॥

**नादिचि ६।१।१०४ ॥**

आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि।। रामौ ।

**बहुषु बहुवचनम् १।४।२१॥**

बहुत्वविवक्षायां बहुवचनं स्यात् ॥

**चुटू १।३।७॥**

प्रत्ययाद्यौ चुटू इतौ स्तः ॥

**विभक्तिश्च १।४।१०४॥**

सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥

**न विभक्तौ तुस्माः १।३।४॥**

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सस्य नेत्वम् । रामाः ॥

**एकवचनं सम्बुद्धिः २।३।४९॥**

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ।।

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ३ । १३ ॥**

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् ॥

**एङ्ह्रस्वात्सम्बुद्धेः ६।१।६९॥**

एङन्तात् ह्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः ।

**अमि पूर्वः ६।१।१०७॥**

अकोऽम्यचि पूर्वरूपमेकादेशः स्यात् ॥ रामम् । रामौ ॥

**लशक्वतद्धिते १।३।८॥**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥

**तस्माच्छसो नः पुंसि ६।१।१०३॥**

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ।।

**अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२॥**

अट् कवर्गः पवर्ग आङ नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । इति प्राप्ते ॥

**पदान्तस्य ८।४।३७॥**

पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥

**टाङसिङसामिनात्स्याः ७।१।१२॥**

अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥

**सुपि च ७। ३। १२०॥**

यञादौ सुपि अतोऽङ्गस्य दीर्घः स्यात्। रामाभ्याम्॥

**अतो भिस ऐस् ७। १। ९॥**

अनेकाल्शित्सर्वस्य। रामैः॥

**ङेर्यः ७। १। १३॥**

अतोऽङ्गात्परस्य ङेर्यादेशः स्यात्॥

**स्थानिवदादेशोऽनल्विधौ १। १। ५६॥**

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ। इति स्थानिवत्वात् सुपि चेति दीर्घः। रामाय। रामाभ्याम्।

**बहुवचने झल्येत् ७। ३। १०३॥**

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः स्यात्। रामेभ्यः। सुपि किम्? पचध्वम्॥

**वाऽवसाने ८। ४। ५६॥**

अवसाने झलां चरो वा स्युः। रामात्, रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥

**ओसि च ७। ३। १०४॥**

ओसि परे अतोऽङ्गस्यैकारः स्यात्। रामयोः॥

**ह्रस्वनद्यापो नुट् ७। १। ५४॥**

ह्रस्वान्तान्नद्यन्तादावन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात्।

**नामि ६। ४। ३॥**

नामि परे अजन्ताङ्गस्य दीर्घः स्यात्। रामाणाम्। रामे। रामयोः। सुपि-एत्वे कृते॥

**आदेशप्रत्यययोः ८।३।५९॥**

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः स्यात्। इषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥

**सर्वादीनि सर्वनामानि १। १। २७॥**

सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युस्मद् अस्मद् भवतु किम्॥

**जसः शि ७ । १ । १७ ॥**

अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्। अनेकालत्वात्सर्वादेशः। सर्वे॥

**सर्वनाम्नः स्मै ७ । १ । १४ ॥**

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात् ॥ सर्वस्मै ।।

**ङसिङ्योः स्मात्स्मिनौ ७ । १ । १५ ॥**

अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्।

**आमि सर्वनाम्नः सुट् ७ । १ । ५२ ॥**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः ॥ उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् २ । उभयो २ । तस्येह पाठोऽकजर्थः । डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न, यथासङ्ख्यमनुदेशः समानाम् इति ज्ञापकात् ॥

**आतो धातोः ६ । ४ । १४० ॥**

आकारान्तो यो धातुस्तदन्तस्य लोपः स्यात्। अलोऽन्त्यस्य । विश्वपः । विश्वपा ॥ विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? हाहान् । हरिः ॥ हरी ॥

**जसि च ७ । ३ ।१०६ ॥**

ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः ।

**ह्रस्वस्य गुणः ७ । ३ । १०८ ॥**

ह्रस्वस्य गुणः स्यात् सम्बुद्धौ । हे हरे । हरिम । हरी । हरीन् ।

**शेषोघ्यसखि १ । ४ । ७ ॥**

शेष इति स्पष्टार्थम् । अनदीसंज्ञौ–ह्रस्वौ या विदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् ॥

**आङो नाऽस्त्रियाम् ७ । ३ । १२० ॥**

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । हरिभ्याम् । हरिभिः ॥

**घेर्ङिति ७ । ३ । १११ ॥**

घिसंज्ञस्य ङिति सुपि गुणः स्यात्॥ हरये ।

**ङसिङसोश्च ६ । १ । ११० ॥**

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरे । हर्योः । हरीणाम् ।

पतिशब्दः समास एव घिसंज्ञः । पत्ये । पत्युः २ । पत्योः । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ।।

## अजन्त पुँल्लिङ्गप्रकरणम् समाप्तम्

### अभ्यासः

१. रामशब्दस्य सर्वाणि रूपाणि लिखत ।

२. अधोलिखित विभक्तीनां रूपाणि दर्शयत

(क) सर्वशब्दस्य चतुर्थ्येकवचनस्य

(ख) हरिशब्दस्य पञ्चम्याः

(ग) पतिशब्दस्य तृतीयाया एकवचनस्य

(घ) विश्वपाशब्दस्य द्वितीयाया बहुवचनस्य

३. के सर्वादयः ? किञ्च सर्वनामसंज्ञकं सूत्रम् ?

# अथ अजन्तस्त्रीलिङ्गप्रकरणम्

रमा ॥

**औङ आपः ७।१।१८॥**

आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥

**सम्बुद्धौ च ७।३।१०६॥**

आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादितिसम्बुद्धिलोपः । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥

**आङि चापः ७।३।१०५॥**

आङि ओसि चाप एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ।

**याडापः ७।३।११३॥**

आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिः । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः । रमायाः । रमाणाम् । रमायाम् । रमासु ॥ एवं दुर्गाम्बिकादयः ।

**न तिसृचतसृ ६।४।४॥**

एतयोर्नामि दीर्घो न स्यात् । तिसृणाम् । तिसृषु । द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । गौरी । गौर्यौ । गौर्यः ॥ हे गौरि । गौर्यै इत्यादि । एवं नद्यादयः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः ।

# अथ अजन्तनपुंसकलिङ्गप्रकरणम्

**अतोऽम् ७।१।२४॥**

अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात् । अमिपूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्मात्रलोपः । हे ज्ञान ॥

**नपुंसकाच्च ७।१।१९।**

क्लिबादौङः शी स्यात् । भसंज्ञायाम् ।

**यस्येति च ६।४।१४८॥**

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः स्यात् । इत्यल्लोपे प्राप्ते (औङः श्यां प्रतिषेधो वाच्यः) । ज्ञाने ॥

**जश्शसोः शिः ७।१।२०॥**

क्लीबादनयोः शिः स्यात् ॥

**शि सर्वनामस्थानम् १।१।४२॥**

शि इत्येतदुक्तसंज्ञं स्यात् ।।

**नपुंसकस्य झलचः ७।१।७२॥**

झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥

**मिदचोऽन्त्यात्परः १।१।४७॥**

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥ उपधादीर्घः ॥ ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः ॥

**स्वमोर्नपुंसकात् ७।१।२३॥**

क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि ॥

**इकोऽचि विभक्तौ ७।१।७३॥**

इगन्तस्य क्लीबस्य नुम् स्यादचि विभक्तौ। वारिणी। वारीणि । न लुमतेत्यस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुण– हे वारे, हे वारि । आङो ना । वारिणा । घेर्ङितीति गुणे प्राप्ते (वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन) वारिणे । वारिणः । वारिणोः । नुमचिरे नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥

अभ्यासः

१. रूपाणि लिखत

(क) 'रमा' शब्दस्य तृतीयायाः

(ख) 'दुर्गा' शब्दस्य पञ्चम्याः

(ग) 'गौरी' शब्दस्य सप्तम्याः

२. निम्नाङ्कित रूपाणां विभक्तिनिरूपणं कुरुत

(क) ज्ञानानि (ख) वारीणि

३. हे वारे ? इत्यत्र गुणविधायकं सूत्रं लिखत ।

# अथ हलन्तपुँल्लिङ्गप्रकरणम्

राजा ॥

**नङिसम्बुद्धयोः ८।२।८॥**

नस्य लोपो न स्यात् ङौ सम्बुद्धौ च। हे राजन्। (ङावुत्तरपदे प्रतिषेधो वक्तव्यः) ब्रह्माणि निष्ठाः, ब्रह्म निष्ठः। राजानौ। राजानः। राज्ञः।

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२॥**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र– राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। राजभ्याम्। राजभिः राजभ्यः। राजनि, राज्ञि। राजसु। यज्वा। यज्वानौ। यज्वान।

**सान्तमहतः संयोगस्य ६।४।१०॥**

सान्तसंयोगस्य महतश्च यो नकारस्तयोपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। महान्। महान्तौ। महान्तः। हे महन्। महद्भ्याम् ॥

# अथ हलन्तस्त्रीलिङ्गप्रकरणम्

अप्शब्दो नित्यं बहुवचनान्तः। अप्तृन्निति दीर्घः। आपः। अपः ॥

**अपो भि ७।४।४८॥**

अपस्तकारः स्यात् भादौ प्रत्यये। अद्भिः अद्भ्यः। अपाम्। अप्सु। दिक, दिग्। दिशः। दिग्भ्याम्। त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्, दृग्। दृग्भ्याम्।

# अथ हलन्तनपुंसकलिङ्गप्रकरणम्

जगत्। महत् ॥

**नपुंसकाच्च ७।१।१९॥**

क्लीबादौ ङः शी स्यात्। भसंज्ञायाम् ॥

**शि सर्वनामस्थानम् १।१।४२॥**

शि इत्येतदुक्तसंज्ञं स्यात् ॥

**नपुंसकस्य झलचः ७।१।७२॥**

झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥

## अभ्यासः

१. रूपाणि लिखत

(क) राजन् शब्दस्य द्वितीयाया बहुवचनस्य

(ख) महत् शब्दस्य द्वितीयाया एकवचनस्य

(ग) अप् शब्दस्य प्रथमाया बहुवचनस्य

(घ) दृग् शब्दस्य सर्वाणि

# अथ भ्वादिप्रकरणम्

## तत्र परस्मैपदिनः

लट् । लिट । लुट । लृट । लेट् । लोट् । लङ । लिङ । लुङ । लृङ । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ।।

**लः कर्मणि च भावे चाकर्मकेभ्यः ३ । ४ । ६९॥**

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ।।

**वर्तमाने लट् ३ । २ । १२३ ॥**

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्वम् ।

भू सत्तायाम् ॥१॥ कर्तृविवक्षायां भू ल् इति स्थिते ॥

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ ३ । ४ । ७८ ॥**

एतेऽष्टादश लादेशाः स्युः ॥

**शेषे प्रथमः १ । ४ । १०८ ॥**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ।

**तिङशित्सार्वधातुकम् ३ । ४ । ११३ ॥**

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥

**कर्तरि शप् ३ । १ । ६८ ॥**

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ॥

**सार्वधातुकार्धधातुकयोः ७ । १ । ८४ ॥**

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ।।

**झोऽन्तः ७ । १ । ३ ॥**

प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ।।

**अतो दीर्घो यञि ७ । ३ । १०१ ॥**

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥

**परोक्षे लिट् ३ । २ । ११५ ॥**

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ । ४ । ८२ ॥**

लिटस्तिवादीनां नवानां णलादयो नव: स्युः । भू अ इति स्थिते ।।

**भुवो वुग् लुङलिटोः ६ । ४ । ८८ ॥**

भुवो वुगागमः स्यात् लुङलिटोचि ।।

**लिटि धातोरनभ्यासस्य ६ । १ । ८ ॥**

लिटि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य ।। भूव् भूव् अ इति स्थिते ।।

**पूर्वोऽभ्यासः ६ । १ । ४ ॥**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ।

**हलादि शेषः ७ । ४ । ६० ॥**

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति हलोपः ।

**ह्रस्वः ७ । ४ । ५६ ॥**

अभ्यासस्याचो ह्रस्वः स्यात् ॥

**भवतेरः ७ । ४ । ७३ ॥**

भवतेरभ्यासस्योकारस्य अः स्याल्लिटि ।।

**अभ्यासे चर्च ८ । ४ । ५४ ॥**

अभ्यासे झलां चरः स्युर्जशश्च । झलां जशः खयां चरः इति विवेकः । बभूव । बभूवतुः । बभूवुः ॥

**लिट् च ३ । ४ । ११५ ॥**

लिडादेशस्तिङार्धधातुकसंज्ञः स्यात् ॥

**आर्धधतुकस्येड्बलादेः ७ । २ । ३५ ॥**

बलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

**अनद्यतने लुट् ३ । ३ । १५ ॥**

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ।।

**स्यतासी लृलुटोः ३ । १ । ३३ ॥**

धातोः स्यातासी एतौ प्रत्ययौ लृलुटोः परतः । शबाद्यपवादः । लृ इति लृङ्लृटोर्ग्रहणम् ।

**आर्धधातुकं शेषः ३ । ४ । ११४ ॥**

तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥

**लुटः प्रथमस्य डारौरसः २ । ४ । ८५ ॥**

डा रौ रस् एते क्रमात्स्युः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥

**तासस्त्योर्लोपः ७ । ४ । ५० ॥**

तासेरस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये परे ॥

**रि च ७ । ४ । ५१ ॥**

रादौ प्रत्यये तथा । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥

**लृट् शेषे च ३ । ३ । १३ ॥**

भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां वा । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भयिष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ।

**लोट् च ३ । ३ । १६२ ॥**

विध्याद्यर्थेषु धातोर्लोट् स्यात् ॥

**आशिषि लिङ्लोटौ ३ । ३ । १७३ ॥**

**एरुः ३ । ४ । ८६ ॥**

लोट् इकारस्य उ स्यात् । भवतु ॥

**तुह्योस्तातङाशिष्यन्यतरस्याम् ७ । १ । ३५ ॥**

आशिषि तुह्योस्तातङ वा स्यात् । परत्वात्सर्वादेशः । भवतात् ॥

**लोटो लङ्वत् ३ । ४ । ८५ ॥**

लोटो लङ इव कार्यं स्यात् । लोटस्तामादयः सलोपश्च ॥

**तस्थस्थमिपां तान्तन्तामः ३ । ४ । १०१ ॥**

ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥

**सेर्ह्यपिच्च ३ । ४ । ८७ ॥**

लोटः सेर्हिः स्यात् सोऽपिच्च ।

**अतो हेः ६ । ४ । १०५ ॥**

अतः परस्य हेर्लुक स्यात् । भव । भवतात् । भवतम् । भवत ॥

**मेर्निः ३ । ४ । ८९ ॥**

लोटो मेर्निः स्यात् ॥

**आडुत्तमस्य पिच्च ३ । ४ । ९२ ॥**

लोडुत्तमस्याट् स्यात् पिच्च । हिन्योरुत्वं न "इकारोच्चारणसामर्थ्यात्"। भवानि ॥

**ते प्राग्धातोः १ । ४ । ८० ॥**

ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥

**आनि लोट् ८ । ४ । १६ ॥**

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । (दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) दुस्थितिः । दुर्भवानी । (अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्) अन्तर्भवाणि ॥

**नित्यं ङितः ३ । ४ । ९९ ॥**

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ॥

**अनद्यतने लङ् ३ । २ । १११ ॥**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥

**लुङ्लङ्लृङ्क्ष्वडुदात्तः ६ । ४ । ७१ ॥**

एष्वङ्गस्याट् स्यात्स चोदात्तः ॥

**इतश्च ३ । ४ । १०० ॥**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात् ॥ अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ३ । ३ । १६१ ॥**

एष्वर्थेषु धातोर्लिङ् स्यात् ॥

**यासुट् परस्मैपदेषूदात्तो ङिच्च ३ । ४ । १०३ ॥**

लिङः परस्मैपदानां यासुडागमो ङिच्च ॥

**लिङः सलोपोऽनन्त्यस्य ७ । २ । ७९ ॥**

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति प्राप्ते ॥

**अतो येयः ७ । २ । ८० ॥**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् स्यात् । गुणः ॥

**लोपो व्योर्वलि ६ । १ । ६६ ॥**

वकारयकारयोर्लोपः स्याद्वलि । भवेत् । भवेताम् ॥

**झेर्जुस् ३ । ४ । १०८ ॥**

लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥

**लिङाशिषि ३ । ४ । ११६ ॥**

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥

**किदाशिषि ३ । ४ । १०४ ॥**

आशिषि लिङो यासुट् कित् । स्कोः संयोगाद्योरिति सलोपः ॥

**क्क्ङिति च १ । १ । ५ ॥**

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धि न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

**लुङ् ३ । २ । ११० ॥**

भूतार्थे धातोर्लुङ् स्यात् ।

**माङि लुङ् ३ । ३ । १७५ ॥**

सर्वलकारापवादः ॥

**स्मोत्तरे लङ् च ३ । ३ । १७६ ॥**

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥

**च्लि लुङि ३ । १ । ४३ ॥**

शबाद्यपवादः ॥

**च्लेः सिच् ३ । १ । ४४ ॥**

इचावितौ ॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २ । ४ । ७७ ॥**

एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥

**भूसुवोस्तिङि ७ । ३ । ८८ ॥**

भू सु एतयोः सार्वधातुके तिङिपरे गुणो न स्यात् । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

**न माङ्योगे ६ । ४ । ७४ ॥**

अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ॥

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३ । ३ । १३९ ॥**

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्, इत्यादि ज्ञेयम् ॥

**अत** सातत्यगमने ॥३॥ अतति ॥

**इषुगमियमां छः ७ । ३ । ७७ ॥**

एषां छः स्यात् शिति । गच्छति । जगाम ॥

**गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८ ॥**

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता ॥

**गमेरिट् परस्मैपदेषु ७ । २ । ५८ ॥**

गमेः परस्य सादेरार्धधातुकस्येत् स्याट् परस्मैपदेषु । गमिष्यति । गच्छतु । गच्छेत् । गम्यात् ॥

**पुषादिद्युताद्यलृदितः परस्मैपदेषु ३ । १ । ५५ ॥**

श्यन्विकरणपुषादेर्द्युतादेलृदितश्च परस्य च्लेरङ स्यात् परस्मैपदेषु । अगमत् । अगमिष्यत् ।

## अथात्मनेपदिनः

**एध** वृद्धौ ॥१॥

**टित आत्मनेपदानां टेरे ३ । ४ । ७९ ॥**

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥

**आतो ङितः ७ । २ । ८१ ॥**

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ॥

**थासः से ३ । ४ । ८० ॥**

टितो लस्य थासः से स्यात् । लभसे । लभेथे । लभध्वे । अतोगुणे । लभे । लभावहे । लभामहे ॥

# अथादादयः

**अद भक्षणे ॥१॥**

**अदिप्रभृतिभ्यः शपः २ । ४ । ७२ ॥**

लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः॥

**लिट्यन्यतरस्याम् २ । ४ । ४० ॥**

अदो घस्लृ वा स्याल्लिटि। जघास। उपधालोपः।

**शासिवसिघसीनां च ८ । ३ । ६० ॥**

इण्कुभ्यां परस्यैषां सस्य षः स्यात्। घस्य चर्त्वम्। जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास, जघस। जक्षिव। जक्षिम। आद। आदतुः। आदुः॥

**इडत्त्यर्तिव्ययतीनाम् ७ । २ । ६६ ॥**

अद्ऋव्येञ् एभ्यस्थलो नित्यमिट्स्यात्। आदिथ। अत्ता। अत्स्यति। अत्तु। अत्तात्। अदन्तु॥

**हुझल्भ्यो हेर्धिः ६ । ४ । १०१ ॥**

होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अत्तम्। अदानि। अत्त। अदाव। अदाम॥

**अदः सर्वेषाम् ७ । ३ । १०० ॥**

अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः॥

**लुङ्सनोर्घस्लृ २ । ४ । ३७ ॥**

अदो घस्लृ स्याल्लुङि सनि च। लृदित्त्वादङ्। अघसत्। आत्स्यत्।

**अस् भुवि ॥१७॥ अस्ति**

**श्नसोरल्लोपः ६ । ४ । १११ ॥**

श्नस्यास्तेश्चातो लोपः स्यात् सार्वधातुके क्ङिति। स्तः। सन्ति। असि। स्थः। स्थ। अस्मि। स्वः। स्मः॥

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८ । ३ । ८७ ॥**

उपसर्गेणः प्रादुसश्चास्तेः सस्य षः स्यात् यकारेऽचि च परे। निष्यात्। प्रनिषन्तिः। प्रादुःषन्ति। यच्परः किम्? अभिस्तः॥

**अस्तेर्भूः २।४।५२ ॥**

आर्धधातुके। बभूव। भविता। भविष्यति। अस्तु, स्तात्। स्ताम्। सन्तु।

**घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९॥**

घोरस्तेश्च एत्वं स्यात् हे परे अभ्यासलोपश्च । त्वस्यासिद्धत्वाद्धेधि: एश्नसोरित्यल्लोप: तातङ्पक्षे एत्वं न। परेण तातङाबाधात् । एधि । स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् ; स्यु: । भूयात् । अभूत् । अभविष्यत् ।

# अथ दिवादय:

**णस अदर्शने ॥१२॥**

नश्यति । ननाश । नेशतु: ॥

**रधादिभ्यश्च ८।२।४५॥**

रध् नश तृप् दृप् द्रुह् मुह् ष्णिह् एभ्यो वलादयार्धधातुकस्य वेट् स्यात् । नेशिथ ॥

**मस्जिनशोर्झलि ७।१।६०॥**

नुम् स्यात् । ननंष्ठ । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्यात् । अनशत् ॥

# अथ तुदादय:

**मुच्लृ मोचने ॥६॥**

**शे मुचादीनाम् ७।१।५९॥**

मुच लिप् विद् लुप् सिच कृत् खिद् पिशां नुम् स्यात् । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् ।।

# अथ तनादय:

**तनु विस्तारे ॥१॥**

**तनाविकृञ्भ्य उ: ३।२।७९॥**

तनादे: कृञश्च ऊ प्रत्यय: स्यात् । शपोऽपवाद: । ततान । तनुत: । तनात, तेने । तनितासि, तनिटासे । तनिष्यति, तनिष्यते ॥ तनोतु, तनुताम् ॥ अतनोत् । अतनु । तनुयात, तन्वीत् । तन्यात, तनिषीष्ट । अतनीत्, अतानीत ॥

**तनादिभ्यस्तथासो: २।४।७९॥**

तनादे: सिचो वा लुक् स्यात्तथासो: । अतत, अतनिष्ट अतथा:, अतनिष्ठा: । अतनिष्यत, अतनिष्यत ।।

# अथ क्र्यादयः

**डुक्रीञ् द्रव्यविनिमये ॥१॥**

**क्र्यादिभ्यः श्ना ३।१।१८ ॥**

शपोऽपवादः ॥ क्रीणाति । ई हल्यघोः । क्रीणीतः । श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ, चिक्रेथ । चिक्रिय । चिक्रिये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु, क्रीणीतात् । क्रीणीताम् । अक्रीणात्, अक्रीणीत । क्रीणीयात् । क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रैषीत्, अक्रेष्ट । अक्रेष्यत्, अक्रेष्यत ॥

# अथ चुरादयः

**चुर स्तेये ॥१॥**

**सत्यापपाशरूपवीणातुलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५॥**

एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः "प्रातिपदिकाद्धात्वर्थे" इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिप् शबादि । गुणायादेशौ । चोरयति ॥

**णिचश्च १।३।७४ ।**

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनी क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात्, चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः । चङीति द्वित्वम् । हलादिः शेषः । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत्, अचूचुरत ।

अभ्यासः

१. लकाराः कति सन्ति ?

२. लादेशा अष्टादश आदेशाः के ?

३. 'भू' धातोर्लृट् लकारस्य सर्वाणि रूपाणि लिखत ।

४. ताम्, तम्, त, अम्, आदेशाः कुत्र भवन्ति ?

५. रूप सिद्धिप्रकारं दर्शयत

(क) अभूवन् (ख) जग्मतुः (ग) एधते

६. अधस्तन रूपाणां धातुस्वरूपं निर्दिशत

(क) जघास (ख) एधि (ग) अभूवन् (घ) अचूचुरत्

# कृदन्त

## अथ कृत्यप्रक्रिया

**तव्यत्तव्यानीयरः ३।१।९६ ॥**

धातोरेते प्रत्ययाः स्युः। एधितव्य, एधिनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वम्। चेतव्यश्चयनीयो वा धर्मस्त्वया। (केलिमर उपसङ्ख्यानम्) पचेलिमा माषाः। पक्तव्या इत्यर्थः। भिदेलिमाः सरलाः। भेत्तव्या इत्यर्थः। कर्मणि प्रत्यय ॥

**अचो यत् ३।१।९७॥**

अजन्ताद्धातोर्यत् स्यात्। चेयम् ॥

**ऋहलोर्ण्यत् ३।१।१२४ ॥**

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् स्यात्। कार्यम्। हार्यम्। धार्यम् ॥

# पूर्व कृदन्त

**ण्वुल्तृचौ ३।१।१३३ ॥**

धातोरेतौ स्तः। कर्तरि कृदिति कर्त्रर्थे ॥

**क्तक्तवतू निष्ठा १।१।२६ ॥**

एतौ निष्ठासंज्ञौ स्तः ॥

**निष्ठा ३।२।१०२ ॥**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति भावकर्मणोः क्तः। कर्तरि कृदिति कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विश्वं कृतवान् विष्णुः।

**लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४ ॥**

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः। शवादि। पचन्तं चैत्रं पश्य ॥

# उत्तर कृदन्त

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०॥**

क्रियार्थायाम् क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति ॥

**भावे ३।३।१८॥**

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः ॥

**स्त्रियां क्तिन् ३।३।९४॥**

स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः । स्तुतिः (ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः) तेन नत्वम् ॥

**समानकर्तृकयोः पूर्वकाले ३।४।२१॥**

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति ॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७॥**

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम्? अकृत्वा ।

अभ्यासः

१. **निम्नाङ्कित पदानां प्रत्ययं निरूपयत**

(क) दातव्यम्, श्रोतव्यम्, स्थातव्यम्

(ख) कर्तुम्, स्तोतुम्, श्रोतुम्

(ग) हार्यम्, वार्यम्, धार्यम्

(घ) अर्चितः, जातः, नीतः

(ङ) कथितवान्, नीतवान्, स्मृतवान्

(च) जायमानम्, वन्दमानम्, वर्तमानम्

(छ) उत्थाय, अनुभूय, आनीय

# कारक

## अथ विभक्त्यर्थाः

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २।३।४६॥**

नियतोपस्थितिकः प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे लिङ्गमात्राद्यधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा स्यात्। प्रातिपदिकार्थमात्रे-उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्। लिङ्गमात्रे–तटः तटी। तटम्। परिमाणमात्रे–द्रोणो व्रीहिः। वचनं सङ्ख्या। एकः। द्वौ। बहवः॥

**सम्बोधने च २।३।४७॥**

प्रथमा स्यात्। हे राम॥

**कर्तुरीप्सिततमं कर्म १।४।४६॥**

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्॥

**कर्मणि द्वितीया २।३।२॥**

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मादौ प्रथमा– हरिः सेव्यते। लक्ष्म्या सेवितः॥

**अकथितं च।१।४।५१॥**

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। "**दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्॥ कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्।१॥**

गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। हरति, देवदत्तं शतं मुष्णाति। ग्राममजा, कर्षति वहति वा। अर्थनिबन्धनेयं संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते, अभिधत्ते, वक्तीत्यादि॥

**स्वतन्त्र कर्ता १।४।५४॥**

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्॥

**साधकतमं करणम् १।४।४२॥**

क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्॥

**कर्तृकरणयोस्तृतीया २।३।१८॥**

अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो बाली॥

**कर्मणा यमभिप्रैति स सम्प्रदानम् १ । ४। ३२ ।।**

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ।।

**चतुर्थी सम्प्रदाने २ । ३ । १३ ॥**

विप्राय गां ददाति ।।

**नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च २ । ३ ।१६ ॥**

एभिर्योगे चतुर्थी स्यात् । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभु समर्थः शक्त इत्यादि ।।

**ध्रुवमपायेऽपादानम् १ । ४ । २४ ॥**

अपायो विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥

**अपादाने पञ्चमी २ ।३। २८ ॥**

ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ।।

**षष्ठी शेषे २ । ३ । ५० ॥**

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादि सम्बन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शम्भोश्चरणयोः ।।

**आधारोऽधिकरणम् १ । ४ । ४५ ॥**

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ।।

**सप्तम्यधिकरणे च २ । ४ । ३६ ॥**

अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ।।

अभ्यासः

१. **निम्नाङ्कित वाक्यानां कारकस्वरूपं निरूपयत**

(क) गोपालः पठति, रामः लिखति, हरिः गच्छति

(ख) छात्राः गुरुं नमेयुः, शिशुः दुग्धं पिबेत्, नृपः शत्रुं जयेत्

(ग) मदनः जलेन मुखं प्रक्षालयति, कुम्भकारः दण्डेन चक्रं चालयति

(घ) उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये, दीनाय द्रविणं ददाति,

(ङ) नास्ति सत्यात् परोधर्मः, असज्जनात्कस्य भयं न जायते

(च) अलसस्य कुतो विद्या, अविद्यस्य कुतो धनम्

(छ) गुहायां वसति मुनिः, सूर्ये उदिते कमलं प्रकाशते, सायंकाले चन्द्र उदेति

# समासः

## तत्पुरुषः

**तत्पुरुषः २ । १ । २२ ॥**

अधिकारोऽयम् प्राग्बहुव्रीहेः ॥

**द्विगुश्च २ । १ । २३ ॥**

द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥

**पञ्चमी भयेन २ । १ । ३७ ॥**

चोराद्भयम् चोरभयम् ॥

**स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९ ॥**

**पञ्चम्याः स्तोकादिभ्यः ६ । ३ । २ ॥**

अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्यासादागतः । दूरादागतः। कृच्छ्रादागतः ॥

**षष्ठी २ । २ । ८ ॥**

सुबन्तेन प्राग्वत् । राजपुरुषः ।

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १ ॥**

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसङ्ख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम् ? पूर्वश्छात्राणाम् ॥

**अर्धं नपुंसकम् २ । २ । २ ॥**

समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत् । अर्धं पिप्पल्याः अर्धपिप्पली ॥

## कर्मधारयः

**विशेषणं विशेष्येण बहुलम्**

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात् क्वचिन्नित्यम्—कृष्णसर्पः । क्वचिन्न—रामो जामदग्न्यः ॥

## नञ्

**नलोपो नञः ६ । ३ । ७३ ॥**

नञो नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणः अब्राह्मणः॥

## बहुव्रीहिः

**अनेकमन्यपदार्थे २।२।२४ ॥**

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ पीताम्बरो हरिः ॥

## द्वन्द्वः

**चार्थे द्वन्द्वः २।२।२६ ॥**

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र "ईश्वरं गुरुं चाभजस्व" इति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । "भिक्षामट गां चानय", इति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । "धवखदिरौ छिन्धि" इति मिलितानामन्वय इतरेतरयोगः । संज्ञापरिभाषम् । समूहः समाहारः ॥

### अभ्यासः

**१. निम्नाङ्कित पदानां समासं निरूपयत**

(क) वृक्षपतितः, रोगात् मुक्तः, द्व्यङ्गुलम्

(ख) देवपूजा, सुखभोग, चन्द्रमुखम्

(ग) नीलोत्पलम् सुन्दर पुरुषः, अपर कायः

(घ) अनश्वः, असुखम्, अप्रियः

# तद्धितः

## अपत्याधिकारः

**तस्यापत्यम् ४ । १। ९२ ॥**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे: उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥

**ओर्गुणः ६ । ४ । १४६ ॥**

उवर्णान्तस्य भस्य गुणः तद्धिते: । आश्वपतः ॥

**अत इञ् ४ । १ । ९५ ॥**

अदन्तं यत्प्रातिपदिकं तस्मादिञ् स्यात् अपत्यर्थे । दाक्षिः ।

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७ । १ । २ ॥**

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् । गर्गस्य युवापत्यं गार्ग्यायणः । दाक्षायणः ।

**स्त्रीभ्यो ढक् ४ । १ । १२० ॥**

स्त्रीप्रत्ययान्तेभ्यां ढक् स्यात् । वैनतेयः ॥

## शैषिकः

**वृद्धाच्छः ४ । २ । ११४ ॥**

शालीयः । मालीयः । तदीयः । (वा नामधेयस्य वृद्धसंज्ञा वक्तव्या) देवदत्तीयः, दैवदत्तः ।

## विकारार्थः

**नित्यं वृद्धशरादिभ्यः ४ । ३ । १४४ ॥**

आम्रमयम् ॥

## मत्वर्थीयः

**अत इनिठनौ ५ । २ । ११५ ॥**

दण्डी । दण्डिकः ॥

**तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४॥**

गावोऽस्यास्मिन्वा सन्ति गोमान् ॥

## प्राग्दिशीयः

**पञ्चम्यास्तसिल् ५।३।७॥**

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात् ॥ कस्मात् ॥

**सप्तम्यास्त्रल् ५।३।१०॥**

कुत्र । यत्र । तत्र । बहुत्र ॥

## त्वतलोरधिकारः

**तस्य भावस्त्वतलौ ५।१।११९ ॥**

प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबम् । तलन्तम् । स्त्रियाम् ॥

**गुणवचनब्राम्हणादिभ्यः कर्मणि च ५।१।१२४ ॥**

चाद्भावे । जडस्य भावः कर्म वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । आकृतिगणोऽयम् ॥

**पृथ्वादिभ्य इमनिज्वा ५।१।१२२ ॥**

वा वचनमणादिसमावेशार्थम् । पृथोर्भावः प्रथिमा ॥

अभ्यासः

१. निम्नाङ्कित पदानां तद्धितान्त प्रत्ययानि निरूपयत

(क) राघवः, वासुदेवः, पाण्डवः

(ख) द्रौणिः, दाक्षिः, दाशरथिः

(ग) आग्नेयः, कौन्तेयः, द्रौपदेयः

(घ) मासिकः, वार्षिकः, तात्कालिकः

(ङ) लघुत्वम्, लघुता, गुरुत्वम्, गुरुता, विद्वत्त्वम्, विद्वत्ता

(च) गरिमा, महिमा, लघिमा

# स्त्रीप्रत्ययः

**अजाद्यतष्टाप् ४।१।४॥**

अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजा । एडका । अश्वा । चटका । मूषिका । वत्सा । होडा । मन्दा । विलाता । मेधा । इत्यादि । गङ्गा । सर्वा ।

**उगितश्च ४।१।६॥**

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप् स्यात् ॥ भवती । भवन्ती । पचन्ती ।

अभ्यासः

**१. निम्नाङ्कित पदानां स्त्रीप्रत्ययानि निरूपयत**

(क) मूषिका, वत्सा, बाला

(ख) भवती, श्रीमती, जानती

## इति संक्षिप्ता लघुसिद्धान्तकौमुदी

## कक्षागत रूपमा कक्षा ८ का विद्यार्थीले गाउने
## राष्ट्रिय गीत

तराई हेर कति राम्रो हरियो वन हुनाले
पहाड हेर झनै राम्रो गुराँस फुल्नाले
म त हेर त्यसै राम्रो यसै राम्रो
त्यसै राम्रो नेपाली हुनाले
सगरमाथा मेरै आफ्नो शिर भइदिनाले ।।

अरूको भरमा बाँच्नु पर्छ हातै नहुनेले
एक दिन भोकै मर्नु पर्छ पौरख नहुनेले
म त मेरै पौरख खान्छु
म त हातका नङ्ग्रा खियाउँछु, नेपाली हुनाले
सारा नेपालीको लक्ष्य एउटै भइदिनाले ।।

अरूको सारमा हिंड्नु पर्छ आँखै नहुनेले
अन्यायलाई सहनु पर्छ निर्धो भइदिनाले
म त अन्यायसित लड्छु,
ठूलो सानो एउटै देख्छु, नेपाली हुनाले
राजा-रानी मेरै दुइटा आँखा भइदिनाले ।।

संस्कृत भाषा कक्षा ८

